॥ श्रीः ॥

विजयीन्द्रभिक्षुविरचिता

# ॥ न्यायाध्वदीपिका ॥

रक्षोनाथस्य वक्षोभुवि विपुलनखैर्वज्रकल्पैः कृतायां
रक्तस्रोतःसरस्यां प्रतिफलितमिदं स्वं वपुर्वीक्षमाणः ।
स्मृत्वांशं भार्गवाख्यं रघुवरमपि तं रावणं तत्प्रसक्त्या
चैद्यं रुष्टः प्रहृष्टः प्रदिशतु हृदि शं श्रीनृसिंहोऽनिशं नः ॥ १ ॥

उर्व्यां सत्कर्णतां यान्ति यद्गुणाकर्णने रताः[1] ।
अर्णवं गुणरत्नानां पूर्णबोधं तमाश्रये ॥ २ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।
सेवे तं जययोगीन्द्रं कामबाणच्छिदं सदा ॥ ३ ॥

श्रीमन्मध्वमताब्धीन्दुं दुर्वादिफणिपक्षिणम् ।
ब्रह्मण्याख्यमुनेः शिष्यं व्यासदेशिकमाश्रये ॥ ४ ॥

[2]मूर्खोऽपि वावदूकेन्द्रो जायते यदनुग्रहात् ।
श्रीसुरेन्द्रगुरोस्तस्य पादौ नत्वा गिरं भजे ॥ ५ ॥

न्यायाध्वगामिना मध्वदर्शनाद्वृतिसिद्धये ।
तन्यते विजयीन्द्रेण तन्वी न्यायाध्वदीपिका ॥ ६ ॥

---

१ याति—रतः २ मूकोऽपि

ग्रन्थग्रन्थिविमोकस्य नेशते येऽल्पबुद्धयः ।
तेषां कृते जयीन्द्रस्य कृतिरेषा प्रवर्तते ॥ ७ ॥

नित्यं ये पदवाक्यमानसरणीसंशीलनालंकृता-
स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।
या चानेकविने[1]यषट्पदततेः संपुल्लमल्ली सदा
सैषा वाग्विजयीन्द्रसंयमिमणेर्न्यायाध्वगैः सेव्यताम् ॥८॥

---

श्रीचिन्नस्वाम्यार्यवर्यांश्च गुरुपादान् महाशयान् ।
मीमांसाशास्त्रनिष्णातान् शिष्यहृत्पद्मभास्करान् ॥ १ ॥

वैद्यनाथगुरुश्रेष्ठान् पाणिनीये कृतश्रमान् ।
पुत्रवत् शिष्यसन्द्रष्टॄन् शिवपूजारतान् सदा ॥ २ ॥

ध्यात्वा स्तुत्वा च नत्वा च तदुक्तीः परिभाव्य च ।
मीमांसाशास्त्रसिद्धान्तवासनादार्ढ्यसिद्धये ॥ ३ ॥

---

अत्रेदं नवबृन्दावनप्राप्तगुरुस्मरणमावश्यकमिति तत्पद्यानुदाहरामः—

अभ्रमं भङ्गरहितं अजडं विमलं गुरुम् ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ १ ॥

चित्रैः पदैश्च गम्भीरैः वाक्यैर्मानैरखण्डितैः ।
गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥ २ ॥

यश्चकारोपवासेन त्रिवारं भूप्रदक्षिणम् ।
तस्मै नमो यतीन्द्राय श्रीसुरेन्द्रतपस्विने ॥ ३ ॥

---

१ अनेकविधेय

सुखेन बालबोधाय बुद्धिवैशद्यहेतवे ।
न्यायाध्वदीपिकां टीकां संक्षिप्तां कुरुते मुदा ॥ ४ ॥

धर्मसंवर्धनीनाथं प्रणतार्तिहरं शिवम् ।
प्रवृद्धश्रीमतीकान्तं सप्तर्षीश्वरदैवतम् ॥ ५ ॥

भूयोभूयो नमस्कृत्य गृहीत्वा तदनुग्रहम् ।
सुब्रह्मण्यो बालपूर्वः मयूरपुरसंश्रयः ॥ ६ ॥

सुधियः परिगृह्णन्तु गुणलेशं यदि स्थितम् ।
गम्भीरं शाबरं भाष्यं क्व मेऽल्पविषया मतिः ॥ ७ ॥

अथापि धाष्ट्र्याद्युञ्जे क्षन्तव्योऽयं कृपाबलात् ।
सुधियो जैमिनेश्शास्त्रनिष्णाता महयन्त्विमम् ॥ ८

---

अर्थिकल्पितकल्पोऽयं प्रत्यर्थिगजकेसरी ।
व्यासतीर्थगुरुर्भूयात् अस्मदिष्टार्थसिद्धये ॥ ४ ॥

कुशाग्रमतये भानुद्युतये वादिभीतये ।
आराधितश्रीपतये सुधीन्द्रयतये नमः ॥ ५ ॥

मूकोऽपि यत्प्रसादेन मुकुन्दशयनायते ।
राजराजायते रिक्तः राघवेन्द्रं तमाश्रये ॥ ६ ॥

वन्दारुजनसन्दोहमन्दारतरुसन्निभम् ।
वृन्दारकगुरुप्रख्यं वन्दे वादीन्द्रदेशिकम् ॥ ७ ॥

धरणीमण्डले ख्यातं धैर्यादिगुणगुम्फितम् ।
धिक्कृताशेषवादीभं धीरसिंहगुरुम्भजे ॥ ८ ॥

भक्तानाम्मानसाम्भोजभानवे कामधेनवे ।
नमतां कल्पतरवे जयीन्द्रगुरवे नमः ॥ ९ ॥

नववृन्दावनप्राप्तान् गुरून्महिमशालिनः ।
प्रतिभाभासुरान्वन्दे न्यायसंचयशुद्धये ॥ १० ॥

यद्यपि शास्त्रदीपिकादिरूपा दीपिका न्यायाध्वगामिनां गतिसिद्धये तदध्वदर्शनसाधनरूपा पूर्वमेव प्रवृत्ताऽस्ति, तथाऽपि न तथा बालाबाल-साधारणं गतिसाधनदर्शनं सिद्ध्यति ; शास्त्रदीपिकादेः प्रौढप्रकाशत्वेन बालदृष्ट्यभिभावकत्वात्। न हि दृष्ट्यभिभवे तत्पद्धतिदर्शनं संभवत् दृष्टचरम्। अत एव प्रौढसौरालोकाभिभूतदृष्टयो लोकाः सन्निकृष्टानपि पदार्थानपश्यन्तो दृश्यन्ते, तत एव प्रतिरुद्धगतयोऽपि। तस्माद्बालाबालसाधारणं दृष्ट्यनभि-भवेन न्यायाध्वदर्शनेन गतिसिद्ध्यर्थं तन्न्यायाध्वदीपिकानिष्पादनाय अय-

---

षट्शास्त्रनिष्णाताः तत्रभवन्तः विचाररसिकाः श्रीविजयीन्द्रतीर्थ-पादाः जैमिनीयां द्वादशलक्षणीं संजिघृक्षन्तः बालानां सुखबोधाय स्वयं प्रत्यवायविरहेऽपि शिष्याणां संभावितविघ्नविघातार्थं, सदा नृसिंहध्यानपरतया स्वाभाविकहरिध्याननिष्ठाः शिष्यशिक्षायै ग्रन्था-रम्भे नृसिंहध्यानात्मकं मङ्गलमादौ ग्रन्थे निबध्नाति रक्षोनाथस्येति ॥ त्रिःसप्तकृत्वः क्षत्रियवंशनिधनेन, रुधिरतटाकेषु सप्तसु पितॄन् तर्पयतः स्वांशस्य परशुरामस्य सादृश्यात् स्मरणं युक्तमेवेतिभावः॥ श्रीपूर्ण-प्रज्ञं अवलम्बते द्वितीयेन पद्येन। भगवद्दत्तश्रोत्रस्य साफल्यात् सन्तौ सत्कार्ये विनियुक्तौ कर्णौ येषां तेषां भावः तथा॥ टीकाचार्यं श्रीजयतीर्थं भजते तृतीयेन पद्येन॥ व्यासतीर्थमाश्रयते चतुर्थेन। पक्षिणः पातीति किबन्तः गरुडः। साक्षात् गुरुं प्रणमति पंचमेन ॥ प्रतिजानीते षष्ठेन। अध्वा हि अन्धयति। तत्र गन्तॄणामल्पो वा दीपः आवश्यकः। न्याय-संघातोऽध्वरूपः। अयं ग्रन्थश्चाल्पो दीपः दीपिका इत्याशयः॥ तनु विस्तारे, तन्यते=विस्तार्यते॥ पूर्वाचार्यदीपिकादिग्रन्थानां, भाष्य-वार्तिकराणकादीनां सत्वेऽपि तत्र प्रवेशमलभमानानां बालानां कृतिरेषा सफलेत्याशयः विवृतः सप्तमेन ॥ संफुल्लमल्लीतुल्या इयं वाक् मधुलिट्-तुल्यानां वाक्यन्यायार्थिनां अमृतगन्धं प्रदास्यतीति तात्पर्यम्॥ बाला-बालसाधारणस्यैतद्यत्नस्य दृष्ट्यनभिभावकत्वेन न्यायाध्वदर्शनोपयोगं

मस्मदीयो यत्नः न विफलः । "लोके ह्यसंगतानर्थान् वक्ताऽश्रद्धेय-वागिति । दर्शनात् संगतानर्थान् वक्ष्ये श्रद्धेयताप्तये ॥" तथा हि—परस्पर-संगता एव न्यायाः अध्वगतये विज्ञातव्यार्थज्ञानाय तत्फललाभाय च उपयुज्यन्ते, नान्यथा । संगतयश्च अनेकविधाः संभवन्ति । तत्र प्रथममपेक्षिताः संगतयः तिस्रः—शास्त्रसंगतिः, अध्यायसंगतिः, पादसंगतिश्चेति । ताश्च शास्त्राध्याय-पादानां च त्रयाणां असाधारणे विषये ज्ञाते सति स्वयमेव ऊहितुं शक्यन्त[1] इति शास्त्रस्य अध्यायानां पादानां च तावत् असाधारणो विषयः सामान्यतो ज्ञाप्यते । शास्त्रं नाम तदिह विवक्षितं यत् 'अथातो धर्मजिज्ञासा' इत्यादि [1]'अन्वाहार्ये च दर्शनात्' इत्यन्तं द्वादशाध्यायोपेतं[2] षष्टिपादयुक्तं न्याय-

---

गतिफलावाप्तिं चाह ग्रन्थकारः । संगतेः आवश्यकतां प्रदर्शयन् शृङ्खलावत् जैमिनीयं तन्त्रं मिथःसंगतमत एव प्रेक्षावदुपादेयमित्याह अष्टमेन ॥

[1]जैमिनीयं षोडशलक्षणं शास्त्रमिति केषांचित् मतसत्वेऽपि संकर्ष-काण्डात्मकस्य देवताविचारपरस्य चतुर्लक्षणस्यात्र ग्रन्थे संग्रहाभावात् "अन्वाहार्ये च दर्शनात्"-इत्यन्तमित्युक्तम्। अथ="स्वाध्यायोऽध्येतव्यः"—इति चोदनानुसारेण गुरुकुलवासादिनियमपूर्वकं कुलपरम्परागतवेद-शाखासमग्राध्ययनानन्तरम्। अतः=भाविकर्मानुष्ठानार्थं अपेक्षितजिज्ञा-सितवेदवाक्यार्थतत्त्वज्ञानस्यावश्यकत्वात् अध्ययनविधेश्चार्थज्ञानफल-कत्वेन तत्पर्यन्तकत्वात्। धर्मजिज्ञासा=धर्मविचारः कर्तव्यः॥ स च धर्मः न प्रत्यक्षादिलौकिकप्रमाणषट्कगम्यः अपितु चोदनालक्षणः चोदनैव लक्षणं प्रमाणं यस्य सः, वेदविध्येकसमधिगम्यः अलौकिको वैदिक इति यावत्, औपनिषदं ब्रह्मेति यथा, चोदना लक्षणमेव प्रमाणमेव, न त्वप्रामाण्यशङ्कालेशस्याप्यनवकाशः, प्रथमपादस्य, शब्दार्थ-

---

[1] शक्याः इति

[2] पादोपेतम

निबन्धनात्मकसूत्रसंदर्भरूपम् । तस्य कृत्स्नस्य शास्त्रस्य विषयो धर्म एव । अत एव 'अथातो धर्मजिज्ञासा' इति शास्त्रादिमसूत्रेणो[१]पक्रमरूपेण जिज्ञास्यत्वेन संप्रतिज्ञातः, 'चोदनालक्षणोऽर्थो धर्मः'[३] इति लक्षितः, 'तस्य निमित्तपरीष्टिः'[४] इत्यादिना परीक्षितश्च । अध्यायानां च द्वादशानां प्रमाणादयः प्रसंगान्ता द्वादशपदार्थाः असाधरणाः विषयाः ।

तथा हि—

तत्र प्रथमेऽध्याये विध्यर्थवादमन्त्रनामधेयात्मकस्य कृत्स्नस्य वेदस्य प्रामाण्यं निरूपितं इति तस्याध्यायस्य कृत्स्नवेदप्रामाण्यरूपोऽर्थोऽसाधारणो विषयः ।

द्वितीयाध्याये[२] यजति ददाति जुहोति कर्मणां भेदो निरूपित इति तद्भेदरूपोऽर्थस्तस्यासाधारणो विषयः ।

तृतीयेऽध्याये[३] प्रयाजादीनां दर्शपूर्णमासार्थत्वेन तच्छेषत्वं निरूपितमिति तद्रूपोऽर्थः तस्यासाधारणो विषयः ।

---

**सम्बन्धौत्पत्तिकत्वस्थापनेन, वर्णनित्यत्वप्रतिष्ठापनेन, वाक्यार्थज्ञानस्य पदार्थमूलकत्वस्थापनेन संकेतानपेक्षत्वसाधनेन, वेदापौरुषेयत्व-समर्थनेन च वेदप्रामाण्यतात्पर्यकत्वात् । तस्य[४] जिज्ञासितस्य प्रथम-सूत्रे प्रतिज्ञातस्य, द्वितीयसूत्रलक्षितस्य धर्मस्य निमित्तपरीष्टिः परीक्षा, उत्तरैः सत्सम्प्रयोगादि-सूत्रचयैः क्रियते इति च सूत्रार्थसंग्रहः ॥**

**[५]विधिमन्त्रनामधेयनिषेधार्थवादात्मकं कृत्स्नं आम्नानमित्यर्थः जैमिनीसूत्रमनुरुध्य क्रमोऽयं दत्तः ।**

**शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरात्मकप्रमाणषट्कगम्यो भेदः ।**

---

१ शास्त्रादिसूत्रेण

२ द्वितीयेऽध्याये

चतुर्थे गोदोहनस्य पुरुषार्थप्रयुक्त्या अनुष्ठानं न तु क्रत्वर्थप्रयुक्त्या इत्येवमादयो[1] निरूपिता इति तस्य ते असाधारण[2] विषयाः ।

पञ्चमे क्रमनियतिविधेयत्वादयः तथा इति ते तस्यासाधारणा विषयाः ।

षष्ठे कर्तुः अधिकारः न अन्धादेः इत्यादयो निरुपिता इति ते तस्य तथा ।

सप्तमे समानमितरच्छ्येनेनेत्येवमादिप्रत्यक्षवचनेन अग्निहोत्रादिनाम्ना अनुमितिवचनेन[3] सामान्यतोऽतिदेशो निरूपित इति तस्य सोऽसाधारणो विषयः ।

अष्टमे 'सौर्यं चरुं निर्वपेत्' इत्यत्र निर्वापस्तद्धितेन देवतानिर्देशः, एकदैवत्यं, औषधद्रव्यकत्वं, इत्यादिलिङ्गेन आग्नेयपुरोडाशेतिकर्तव्यतैव नान्येत्येवमादिर्विशेषतोऽतिदेशो वर्णित इति तस्य सोऽसाधारणो विषयः ।

---

३श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यात्मकप्रमाणषट्कगम्यः शेषशेषिभावः ।

श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तीनां क्रमनियामकत्वं न तु अपूर्वक्रमबोधकत्वमिति दर्शयति नियति पदेन ॥

स्त्रीणां रथकारस्य निषादस्थपतेश्चाधिकारोऽपि कुत्रचित् विधिबलात् स्थापितः षष्ठे ॥

प्रत्यक्षवचनातिदेशः,२ नामातिदेशः, सादृश्यकल्पितवचनातिदेशः, स्थानापत्तिकल्पितवचनातिदेशः, आश्रयतः उपस्थितिकल्पितवचनातिदेशः इति पञ्चधा अतिदेशः ॥

---

१ इत्येवमादयोऽर्थाः

२ असाधारणाः

३ अनुमितवचनेन च

नवमे प्रकृतौ 'अग्नये जुष्टं निर्वपामि' इति पठिते मन्त्रे विकृतौ सौर्यचरौ अग्निपदपरित्यागेन सूर्यपदप्रक्षेपेण 'सूर्याय जुष्टं निर्वपामि' इत्येवमूहः[1] प्रतिपादित इति स तस्यासाधारणो विषयः।

दशमे कृष्णलेषु चोदकप्राप्तस्य अवघातस्य वितुषीकरणासंभवेन लोप इत्येवमादयोऽर्था निरूपिता इति ते तस्य असाधारणा विषयाः।

एकादशे बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेन उपकार इत्यादितन्त्रं वर्णितमिति तस्य तद्रूपोऽर्थः [2]असाधारणो विषयः।

द्वादशे प्रधानस्य पशोः उपकाराय अनुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽपि उपकार इत्यादिप्रसङ्गो वर्णित इति तस्य सोऽसाधारणो विषयः इति।

---

अर्थलोपात् बाधस्य कृष्णले वैतुष्याभावेनावघातः यथा इत्युदाहरणं प्राचां मतेन, अवघातस्य प्रदेयप्रकृतिसंस्कारस्य कृष्णले प्रदेयेऽप्रवृत्त्या नेदमुदाहरणम्। अपितु "स्वयंदिनं बर्हिर्भवति"—इत्यादिकमिति नव्याः॥

प्रत्याम्नानात् बाधः शरकुशस्थले, प्रतिषेधात्, पर्युदासाद्वा बाधः होतृवरणाज्यभागादाविति त्रेधा बाधः॥

तन्त्रमपि त्रिविधम्। तथा त्रिविधः प्रसंग उपपादयिष्यते ग्रन्थकारेण॥

लौकिकेऽप्युपन्यासादौ निर्दिष्टविषयासंगतार्थवर्णनं प्रेक्षावदनवधेयमेव स्यादिति सूचयति॥

---

1 एवमाद्यूहः

2 स तस्यासाधारणो

एतेन कथं असंगतार्थनिरूपणं प्रेक्षावदनवधेयं न भवितुमर्हतीति शङ्का निरस्ता। अत एव आहुः—

शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा।
शास्त्रादिविषये [1]ज्ञाते [2]तत्तत्सङ्गतिरूह्यताम्॥

धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः।
प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः॥

अधिकारोऽतिदेशश्च सामान्येन विशेषतः।
ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात्॥ इति॥

अत्र लक्षणशब्दः अध्यायशब्दसमानार्थ इति न काचिदनुपपत्तिः। एवं असङ्गतार्थनिरूपणप्रयुक्तं प्रेक्षावदनवधेयवचनत्वं क्वापि न प्रसज्यत इति प्रदर्शनाय सामान्यतः तत्तदध्यायार्थान् निरूप्य तन्निरूपणपूर्वकं सङ्गतार्थत्वसिद्ध्यर्थमेव तत्तदध्यायपादार्था अपि विशेषतो निरूप्यन्ते—

---

"मार्गादन्यत्र गमनं मूर्खतामेव सूचयेत्। मार्गेण गमनं प्राज्ञान् तोषयेदिति हि स्थितिः॥" नैयायिकग्रन्थे — अतिव्याप्त्यव्याप्ति-असंभवाख्यदोषादूषितमसाधारणं वचनं लक्षणशब्दार्थः— यथा-गन्धवती पृथिवी॥ वैयाकरणानान्तु—सूत्रपर्यायः लक्षणशब्दः—"व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्"-इत्यादौ प्रसिद्धः। मीमांसकानां अध्यायपर्यायः सः॥ यथा "चतुर्लक्षणी वैयासकी"—

द्वादशलक्षणी जैमिनिमीमांसा

षोडशलक्षणी ,,

विंशतिलक्षणी मीमांसा (पूर्वोत्तरा) इत्यादौ—

---

१ विषये तत्र, २ तत्र संगतिरूह्यताम

धर्ममीमांसाशास्त्रेऽस्मिन् 'अथातो धर्मजिज्ञासा' इति शास्त्रादिमसूत्रेण प्रमाणस्वरूपसाधनफलैः धर्मस्य जिज्ञासाशब्दितं विचारं प्रतिज्ञाय [१]अस्मिन् प्रथमेऽध्याये प्रथमपादे साक्षाद्धर्मे प्रमाणभूतायाश्चोदनायाः पौरुषेयत्वाद्य-प्रामाण्यहेतुशङ्कानिराकरणपूर्वकं तत्प्रामाण्यमुपपादितं इति तत्प्रामाण्यमेव तस्य असाधारणो विषयः ।

द्वितीयपादे अर्थवादमन्त्रयोः विध्यपेक्षितद्रव्यदेवतादिस्तुत्यनुष्ठेयार्थ-स्मृतिजनकतया प्रामाण्यं वर्णितं इति तस्य तद्रूपोऽसाधरणो विषयः ।

तृतीयपादे मन्वाद्याप्तप्रणीतवेदाविरुद्धस्मृत्याचारादीनां मूलवेदानु-मापकतया प्रामाण्यं वर्णितमिति तस्य तद्रूपोऽर्थः असाधारणो विषयः ।

चतुर्थे पादे 'अग्निहोत्रं जुहोति', 'श्येनेनाभिचरन् यजेत' इत्यादि-विधिवाक्यगतानां अग्निहोत्रादिपदानां नाम्ना कर्मभेदः, नाम्ना धर्मातिदेशः, नाम्ना दूरस्थस्यानुवाद इत्यादिप्रयोजनवत्कर्मनामतया नाम्नां तत्र धर्मे प्रामाण्य-मुपपादितं इति तस्य तद्रूपोऽर्थो असाधारणो विषयः

---

मन्वादिस्मृतीनां वेदमूलकत्वेन प्रामाण्यसाधनादेव पाणिनीयादि-व्याकरणस्मृतेः सिद्धेऽपि प्रामाण्ये, आनन्त्यात् स्वरूपनियमस्य, साधुत्वपरिष्कारासंभवात् प्रयोगनियमस्य च, वेदमूलकत्वासंभवरूपा-मधिकामाशङ्कां निराकर्तुं व्याकरणाधिकरणं पृथग्गुम्फितं महर्षिणा ॥ तेन सर्वैर्व्युत्पित्सुभिरधिकादरः व्याकरणे, अधिको यत्नश्च कर्तव्यः इति जैमिनेरान्तर आशयः सूच्यते ॥ नामधेयप्रयोजनानि — व्यवहारः, संकल्पः, गुणोपबन्धः, फलोपबन्धः, अतिदेशः इत्यादीनि श्रीराघवेन्द्र-विजयेऽपि कविना प्रोक्तानि ॥

---

१ अस्मिन् = तस्मिन

एवं प्रमाणसिद्धस्य धर्मस्य परस्परभिन्नस्वरूपं द्वितीयाध्याये निरूपितम्। तत्र यजति ददाति जुहोतिचोदनासु यज्यादिधातुभेदरूपेण शब्दान्तरेण यागदानहोमानां भेदो निरूपितः। समिधो यजति, 'तनूनपातं यजति,' इत्यादि विधिषु यजतीति पञ्चकृत्वोऽभ्यासेनाविशेषपुनश्श्रुतिरूपेण प्रयाजादीनां भेदः।

---

"पृथक्त्वनिवेशात् संख्यया कर्मभेदः स्यात्" 2-2-20 (सू) इत्यधिकरणस्य—"तिस्र आहुतीर्जुहोति"—"आज्यभागौ यजति"—इतिवाक्यमुदाहृतं वृत्तिकारेण – उत्पत्तिगतसंख्यायाः कर्मभेदकत्व-मुत्पन्नगतसंख्यायाश्चावृत्तिबोधकत्वमिति चन्यायः स्थापितः। एतन्न्या-यस्यान्यत्र संख्यातिरिक्तगुणेऽपि विरुद्धत्वे संचारेण "यदाग्नेय"—वाक्येऽपि विरुद्धकालयोरुत्पत्तिगतयोः आग्नेययागभेदकत्वं, उत्पन्नगत-सायंप्रातःकालयोरग्निहोत्रकर्मावृत्तिबोधकत्वं च स्थापितं नव्यमीमां-सकेन॥ एतत् स्पष्टत्वादुपेक्ष्य भाष्यकारेण संख्यया कर्मभेदाधि-करणस्य "सप्तदश प्राजापत्यान्" इति वाक्यमुदाहृतम्॥ अत्र तद्धि-तस्यैकशेषात् — तद्धितवाच्यद्रव्यदेवतासंबन्धस्य बहुत्वात्, सप्तदश-कर्माणि इति स्थापितम्॥ ननु तद्धितस्य द्रव्यमात्रवाचित्वात् द्रव्याणां सप्तदशत्वात् कथं संबन्धानां सप्तदशत्वमितिचेन्न "सास्य देवता"—इत्यधिकारेण द्रव्यदेवतासंबन्धस्यैव तद्धितवाच्यत्वेन संबन्धानामेव सप्तदशत्वात्॥ ननु प्रजापतिः देवता एषामिति विग्रहे सप्तदशत्व-विशिष्टानां द्रव्याणामेक एव प्रजापतिदेवतासंबन्ध इतिचेन्न। प्राजापत्य-पद एव एकशेषाङ्गीकारात्—प्रजापतिः देवता अस्येति, प्राजापत्यः। प्राजापत्यश्च प्राजापत्यश्च (१७) प्राजापत्यानिति॥ नन्वेवमपि तदुत्तर-विभक्त्युपात्तसंख्यायाः प्रकृत्यर्थविशेष्ये द्रव्य एवान्वयः न तु विशिष्टे[२] द्वौ त्रयः इत्यादौ तथैव व्युत्पत्तेः। अन्यथा द्वित्वविशिष्टे विभक्त्यु-पात्तद्वित्वसंख्यायाः अन्वये चतुर्णां किल प्रतीतिः स्यात् इतिचेन्न—द्रव्ये समानाभिधानश्रुत्या देवतासंबन्धस्यान्तरङ्गत्वात् प्रथममन्वयः।

'सप्तदशप्राजापत्यान् पशून् आलभते' इत्यत्र २द्रव्यदेवतासंबन्धभेदिन्या सप्तदशसंख्यया तदनुमेययागानां भेदः। 'अथैष ज्योतिः' इत्यादिवाक्येषु ज्योतिरित्यादिनामधेयैः तन्नामकयागानां प्रकृतज्योतिष्टोमयागाद्भेदः। "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्र आमिक्षारूप-गुणान्तरावरुद्धे यागे निवेशमलभमानेन १वाजिनगुणेन वाजिनयागस्य आमिक्षा-यागाद्भेदः। प्रकरणान्तरेण नित्याग्निहोत्रात् मासाग्निहोत्रस्य भेद इति। एवं द्वितीये कर्मभेदः सापवादं प्रपञ्चित इति तस्य स एव असाधारणो विषयः।

तत्र द्वितीयाध्यायस्य प्रथमे पादे आख्यातमेव अपूर्वबोधकमपूर्व-सद्भावः इत्यादिकः कर्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः। द्वितीये धातु-

---

ततः परं संख्यान्वय इत्यङ्गीकारात्॥ एवमपि विशेष्ये द्रव्य एवान्वय-स्वीकारे, बहुत्वावच्छिन्ने देवतासंबन्धो न घटते। यतः "सूक्तहविषोः" —इति हविषि देवतासम्बन्धः। स्वत्वध्वंसानुकूलव्यापारात्मकयाग-करणत्वं हि हविष्ट्वम्। तच्च प्रत्येकवृत्ति। अतः केवलैकैकपशुत्वावच्छे-देनैव देवतासम्बन्ध उचितः। अतश्च बहुत्वानवच्छिन्नस्यैव देवता-प्रतिसम्बन्धित्वात्, प्रतिसम्बन्धितावच्छेदकस्य प्रत्येकवृत्तित्वेन प्रति-संबन्धिभेदप्रतीतेः तद्भेदेन संबन्धभेदसिद्धिः॥ ननु एवं चेत् अनेकयाग-कल्पनागौरवापत्तिः। यथैव सिद्धान्ते अनेकयागाः सकृदनुष्ठानेनोप-पद्यन्ते, तथैव एकेन यागेन, अनेके द्रव्यदेवतासंबन्धाः उपपद्यन्त इति यागानेकत्वकल्पनागौरवं मास्तु इति चेन्न - लाघवापेक्षया पश्वेकता-प्रापिचोदकस्य शास्त्रतया बलवत्वेन नियामकत्वाङ्गीकारात्। अतः चोदकानुरोधेन सर्वत्र यागभेदः भावनाभेदश्चेति सिद्धम्॥

नन्वेतन्न युक्तं — प्रकृतिप्राप्तैकपशुनिष्पन्नैकादश - अवदानगणै-कत्वानुरोधेन सङ्ख्यायाः देवतात्वान्वयोत्तरमन्वयः इति - यतः पशुगतै-

---

१ (वाजिन) (वाजियागस्य)

भेदपुनरुक्त्यादिभिः कर्मभेदः। तृतीये रथंतरादीनां कर्मभेदप्रामाण्यापवादो वर्णितः। चतुर्थपादे नित्यकाम्ययोः प्रयोगयोः भेदः वर्णित इति तेषां विषयभेदो द्रष्टव्यः।

तृतीयाध्याये भिन्नानां कर्मणां श्रुतिलिङ्गादिभिः प्रमाणैः शेषशेषिभावो निरूपितः। शेषशेषिभावो नाम अङ्गाङ्गिभाव एव। अङ्गाङ्गित्वे च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यान्यतमसहितो विनियोगविधिः प्रमाणम्। अङ्गत्वं नाम कर्तृसमीहितसाधनत्वम्। यत् यत्समीहानिमित्तक - कृति-गोचरत्वे सति यत्साधनं तत् तदङ्गमिति निर्गलितोऽर्थः। इदमेव तादर्थ्यम्। अत[1] एव आमिक्षावाजिनयोः साधनमपि दध्यानयनं आमिक्षाङ्गमेव न तु

---

कत्वं श्रुतसाप्तदश्येन शरकुशन्यायात् बाधितं न चोदकादागन्तुमर्हति। अवदानगणैकत्वं तु प्रकृतावार्थिकम्। आर्थिकस्य च पाणिकण्डूयनन्यायेन नैव चोदकात् प्राप्तिरिति चेदुच्यते यागस्यैकत्वे निश्चिते हि पशुगतै-कत्वं श्रुतपशुगतसाप्तदश्येन शरकुशन्यायेन बाध्येत॥ तत्रैवाधुना विचिकित्सा — किं लाघवानुरोधेन यागः एकः, उत प्रकृतिगतपश्वे-कत्वस्यैकयागगतस्यानुरोधेन यागभेदः इति॥

तत्र लाघवापेक्षया शास्त्रस्य बलवत्त्वान्नियामकत्वमभ्युपगच्छामः। एवं च एकस्मिन् यागे एकः पशुः इति शास्त्रानुसारेणात्र यागभेदाः कल्प्यन्ते। एवं च यागानां सप्तदशत्वेऽपि विकृतौ एकैकयागस्य एकैकः पशुः द्रव्यमिति यथाप्रकृत्येवानुष्ठानमिति साप्तदश्यस्यै-कत्वबाधकता नास्ति सिद्धान्तिमते॥ अतोऽत्र सप्तदशकर्माणीति भाष्यकाराशयः। अत एवैतावतीनामाशङ्कानां संभवात् वृत्ति-कारोदाहरणमुपेक्ष्योदाहरणान्तरमुपात्तं श्रीशबरस्वामिभिरित्यलम्॥ अत एव=सत्यन्तविशेषणदानादेव आख्यातं=भावनावाचकमित्येव भाट्ट-

---

[1] अत एव च

वाजिनाङ्गम् । वाजिनस्य नान्तरीयकसिद्धतया वाजिनसमीहानिमित्तक-कृतिगोचरत्वाभावात्, तस्य तथात्वे मानाभावात्। तत्र निरपेक्षः शब्दः श्रुतिः, यथा 'व्रीहिभिर्यजेत' इत्यत्र व्रीहिशब्दः। तेन व्रीहयः पदान्तरसम-भिव्याहारादिनिरपेक्षमेव बोध्यन्ते। वस्तुसामर्थ्यं लिङ्गम्; यथा 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य बर्हिर्लवनप्रकाशन-सामर्थ्यम्; तेन बर्हिर्लवने तस्य विनियोगः। पदसङ्घातो वाक्यम्, यथा 'यजेत स्वर्गकामः' इति। तेन यागस्य स्वर्गशेषता। न ह्यत्र यागस्य शेषत्वे तृतीया श्रुतिः, स्वर्गस्य शेषित्वे द्वितीया श्रुतिर्वा अस्ति। किन्तु समभिव्याहारादेव साध्यसाधन-ताधीः। इतिकर्तव्यताकाङ्क्षा प्रकरणम्, तेन प्रयाजादेः दर्शपूर्णमास-शेषता। तुल्यप्रदेशत्वं स्थानम्, तेन 'अग्नेरहं देवयज्यया अन्नादो

---

**मतमथापि, नियोगः अर्थ इति गुरुमतेन—आख्यातम पूर्वबोधकमिति ग्रन्थः प्रवृत्तः इति भाति॥ अथ वा, भावनापरपर्याययत्नस्य दर्शनान्तरेऽ-सिद्धस्य साधनीयतया अपूर्वत्वं बोध्यम्॥**

तस्य—**दध्यानयनस्य** तथात्वे — **वाजिनसमीहानिमित्तकृति-गोचरत्वे किन्नाम पदमिति चेदुक्त - विश्वनाथकविराजेन साहित्य-दर्पणे—"वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः—इति॥ वृत्तिरप्येवं दृश्यते — "यथा घटः। प्रयोगार्हेति प्रातिपदिकस्य व्यवच्छेदः। अनन्वितेति वाक्यमहावाक्ययोः। एकेति साकाङ्क्षानेकपदवाक्या-नाम्। अर्थबोधकेति कचटतपेत्यादीनाम्। वर्णाः इति बहुवचनम-विवक्षितम्" इति॥**

तुल्यप्रदेशत्वं - **पाठतः अनुष्ठानतश्चेति द्वैविध्यं बोध्यं तेन पशु-धर्माणां दैक्षपश्वङ्गतास्थानात् सिद्ध्यति।** दब्धिरसि **मन्त्रस्य - उपां-**

भूयासम्', 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' इत्यनुमन्त्रणमन्त्रयोः लिङ्गावगताग्नेयाग्नीषोमीययागशेषभावयोर्मध्ये समाम्नातस्य 'दब्धिरस्यदब्धो भूयासम्' इति मन्त्रस्य आग्नेयाग्नीषोमीयमध्यविहितमुपांशुयाजं प्रति शेषता।

समाख्या नाम यौगिकी संज्ञा यथा होतृ[1]चमस इति होतुश्चमसभक्षण-शेषता। एवं सामान्यतः श्रुत्यादयः दर्शिताः।

अथ श्रुत्यादीनां प्रभेदाः तत्प्रभेदानां तत्तदधिकरणसि[1]द्धविषयास्तदप-वादाश्च प्रदर्श्यन्ते - तत्र श्रुतिः त्रिविधा - विधात्री अभिधात्री विनियोक्त्री च। तत्र प्रवर्तनारूपशब्दभावनापरपर्यायविधिशब्दितस्वव्यापारबोधनेन पुरुषस्य प्रवर्तिका श्रुतिः विधात्री, यथा 'यजेत' इत्यादिर्लिङ्लोट्पञ्चमल-कारतव्यप्रत्ययादिः। सा द्विविधा — श्रुता कल्प्या च। श्रुताऽपि द्विविधा-असन्दिग्धा वर्तमानाख्यातत्वसन्दिग्धा सती पञ्चमलकारत्वेन कल्प्या च। तत्राद्या यथा - 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। द्वितीया त्रिविधा - विध्याकाङ्क्षावशात् कल्पनीया, अर्थवादवशात् कल्पनीया, अपूर्वत्वमात्रेण कल्पनीया च। 'व्रीहीनवहन्ति' इत्याद्या। 'अक्ताश्शर्करा उपदधाति' 'तेजो वै घृतम्' इति द्वितीया। 'अधस्तात्समिधं धारयन्ननुद्रवेत् उपरि हि

---

शुयाजसंबन्धिविष्णुप्रजापति, अग्नीषोमान्यतमदेवतायाः द्रव्यस्य वा तदीयस्य, प्रकाशकत्वाभावात्, न लिङ्गादङ्गत्वं सम्भवतीति पाठतः क्रमादेव वक्तव्यमित्याशयः॥

[1]आध्वर्यवमित्यादियाज्ञिकप्रसिद्धायाः लौकिकसमाख्यायाः अप्युप-लक्षणमिदम्॥

---

१ सिद्धविषयाः

देवेभ्यो धारयति' इति तृतीया । कल्प्या विध्याकाङ्क्षार्थवादापूर्वत्वश्रौत-लिङ्गादिपौरुषेयस्मृत्याचारकल्प्यत्वेन पञ्चविधा — 'औदुम्बरो यूपो भवति' इत्यत्र विध्याकाङ्क्षाकल्प्या । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति, सुवर्गस्य लोकस्य अनुख्यात्यै' इत्यत्र द्वितीया । 'शतोक्थ्यं भवति शतातिरात्रं भवति इत्यत्र तृतीया । 'बर्हिर्देवसदनं दामि' इत्यादि-मन्त्रलिङ्गकल्प्या चतुर्थी । अष्टकादिस्मृतिहोलाकाद्याचारकल्प्या पञ्चमी ।

अभिधात्री तु 'व्रीहिभिर्यजेत' इत्यादौ व्रीह्याद्यभिधायिका श्रुतिः पूर्व-[१]मुदाहृता । विनियोक्त्री शेषशेषिभावसंबन्धरूपविनियोगपरा श्रुतिः। सा त्रिविधा-एकप्रत्ययरूपा, एकपदरूपा, विभक्तिरूपा च । तत्राद्या यथा-'पशुना यजेत' इत्यत्र तृतीया । तया हि स्वोक्तकरणत्वं प्रति स्वोक्तैकत्वस्य शेषतोपनीयते । द्वितीया तु 'यजेत' इति पदम् । तेन प्रत्ययोक्तां भावनां प्रति प्रकृत्युक्तस्य यागस्य शेषत्वप्रतीतेः[२] । तृतीया तु द्विविधा-शेषित्वबोधिका शेषत्वबोधिका च ।

---

पञ्चविधेति प्रकारान्तरेण कल्प्यां पञ्चविधामुदाहरणैः प्रपञ्चयति । राजन्यवासिष्ठवाक्यं - विकल्पेन प्राप्तयोः मन्त्रयोः नियमार्थम्, नतु नियतप्राप्तावासिष्ठ्यावृत्तिरूपपरिसंख्याफलकम् इत्यर्थनिर्णयः 6-6-1 अधिकरणे स्पष्टः ॥

"यजमानस्य याज्या"-इत्येतदर्थवादः "स्वयं वा निषद्य यजति"-इत्युत्तरवाक्यं विधायकम् इतिमुख्यः पक्षः । प्रकारान्तरं तु पूर्वस्यापि विधायकत्वमिति ॥ एतच्च 3-5-14 अधिकरणे भाट्टदीपिकायां व्यक्तम् ॥

---

१ प्रागुदाहृता

२ शेषत्वं प्रतीयते

तत्राद्या 'व्रीहीन् प्रोक्षति' इत्यादौ द्वितीया, 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इत्यत्र चतुर्थी च। द्वितीया तु 'स्फयेनोद्धन्ति इत्यादौ तृतीया, 'मूलतः शाखां परिवास्य' इत्यादौ पञ्चमी, 'वेद्यां हवींष्यासादयति' इत्यादौ सप्तमी च। षष्ठी तु संबन्धमात्रे अनुशिष्टा क्वचिच्छेषित्वबोधिका क्वचिच्छेषत्व-बोधिका। तत्राद्या "राजन्यवासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः, तनून-पादन्येषा" मित्यादिः। द्वितीया 'यजमानस्य याज्येत्यादिः'। प्रथमाविभक्तिस्तु न शेषित्वस्य नापि शेषत्वस्य बोधिका, प्रातिपदिकार्थमात्रे [१] अनुशासनात्। एवं केचन श्रुतिप्रभेदाः दर्शिताः।

वस्तुसामर्थ्यं लिङ्गम्। तत्तु[1] द्विविधम् - शब्दसामर्थ्यं अर्थसामर्थ्यं चेति। तत्र 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य लवनप्रकाशनसामर्थ्य-रूपाल्लिङ्गात् लवनशेषता; 'स्वधितिनावद्यति' 'स्रुवेणावद्यति' 'हस्तेनावद्यति', इत्यवदानसामान्ये साधनत्वेन [२] श्रुतस्वधित्यादीनां तत्तत्सामर्थ्यरूपलिङ्गात् विशिष्य मांसद्रवद्रव्यपुरोडाशाद्यवदानेषु शेषता। शेषत्वस्य शेषित्वस्य वा बोधिकया श्रुत्या[2] रहितः पदसमभिव्याहारो वाक्यम्। यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति, यथा वा 'मैत्रावरुणः प्रेष्यति चान्वाह चेति। न हि

---

१ "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा"-इति पाणिनिना मुनिना इति शेषः॥ "अभिहितकारकवाचिनी प्रथमा"—इति तु कात्यायनमतम्॥

२. मैत्रावरुणवाक्ये-आख्यातेनाभिहितत्वात् कर्तरि प्रथमा। एवं

---

*1* तत  *2* श्रुतानां

*3*

होम[1]भावनां प्रति स्वर्गकामस्य भाव्यत्वेन शेषित्वबोधिका द्वितीया श्रुतिः, प्रैषानुवचनं प्रति मैत्रावरुणस्य कर्तृत्वेन शेषत्वबोधिका तृतीया श्रुतिः वास्ति। प्रथमा तु प्रातिपदिकार्थमात्रे अनुशिष्टा। अतः पदसमभिव्याहाररूपेण वाक्येनैव अत्र शेषशेषिभावावगमः। विधिवाक्येन कर्तव्यतयावगतस्य, केन प्रकारेण कर्तव्यमिति विशिष्याज्ञायमानस्य इतिकर्तव्यताकाङ्क्षा प्रकरणम्। तत् द्विविधम्। महाप्रकरणमवान्तरप्रकरणं चेति। तत्राद्येन दर्शपूर्णमासादिकं प्रति प्रयाजादीनाम्, द्वितीयेन प्रयाजादिकम्प्रति अभिक्रमणादीनां च तत्तत्सन्निधिसमाम्नातानां शेषता। स्थानं द्विविधम्। यथासंख्यं सन्निधिश्चेति। तत्राद्येन "दब्धिरस्यदब्धो भूयासम्" इति मन्त्रस्य आग्नेयाग्नीषोमीयमन्त्रद्वयमध्याम्नातस्याग्नेयाग्नीषोमीययागद्वयमध्यानुष्ठेयोपांशुयाजशेषता। सन्निधिस्तु आम्नानसन्निधिः अनुष्ठानसन्निधिः इति द्विविधः। आद्येन "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै" इति मन्त्रस्य महा[१] प्रकरणावान्तरप्रकरणरहितसान्नाय्यपात्रप्रोक्षणशेषता। द्वितीयेन पशुधर्माणां अग्नीषोमीयपशुशेषता समाख्या यौगिकी संज्ञा। सा द्विविधा लौकिकी वैदिकी चेति। "होतृचमसः" इति वैदिकसमाख्यया होतुश्चमसभक्षणं प्रति, "आध्वर्यवम्" इति याज्ञिकप्रसिद्धलौकिकसमाख्यया [2] अध्वर्योः [२] अन्वाधानादिकं प्रति च, कर्तृत्वेन

---

च कात्यायनमते श्रुतिरपि वक्तुं शक्या॥ स्वर्गकामपदस्य शेषित्वं नोभयमतेऽपि श्रुत्या। अपि तु वाक्यादेव॥

१. द्विविधप्रकरणेनागतार्थतां द्योतयितुमिद विशेषणं दत्तम्॥
२. पशुधर्माः उपाकरणनियोजनपर्यग्निकरणादयः चतुर्थाहे, पशुयागः क्रयसन्निधौ च पठ्यते। स च यागः "स एष द्विदैवत्यः पशुरौपवसथ्येऽहन्यनुष्ठेयः" इत्युत्कृष्टः। अतस्तत्रानुष्ठानाभावान्नेतिकर्तव्यताकाङ्क्षा प्रकरणम्। नापि अम्नानसन्निधिः। अपि तु अनुष्ठानसन्निधिरेव

---

1 याग 2 अवधात

शेषता इति। एवं शेषशेषिभावः सापवादः तृतीयाध्याये प्रपञ्चितः ॥ एवं-विधार्थप्रतिपादकस्य तृतीयाध्यायस्य प्रथमे पादे शेषत्वबोधकानां श्रुतिलिङ्गा-दीनां मध्ये श्रुतिर्विचारिता। द्वितीये लिङ्गं विचारितम्। तृतीये वाक्य-प्रकरणादि। चतुर्थे निवीतोपवीतादिष्वर्थवादविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसद्भावः उक्तः। पञ्चमे प्रतिपत्तिकर्माणि। षष्ठे अनारभ्याधी-तानि। सप्तमे वेदितद्धर्मादीनां प्रयाजाद्यङ्गप्रधानोपकारः। अष्टमे परिक्रयादि याजमानम्। इति विषयविवेको द्रष्टव्यः। अथेदानीमुक्तप्रतिज्ञानुसारेण बुद्धिसौकर्याय श्रुतिलिङ्गादीनामुपदेशप्रमाणानां विषयाः प्रदर्श्यन्ते। तत्र प्रवर्तनारूपशब्दभावनापर्यायविधिशब्दितस्वव्यापारबोधनेन पुरुषस्य प्रवर्तिका श्रुतिर्विधात्री। यथा "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ लिङादि-श्रुतिः। सा हि पदान्तरसमभिव्याहारादिनैरपेक्ष्येण प्रवर्तनारूपं स्वव्यापारं बोधयन्ती पुरुषस्य प्रवर्तिका। अत एव पुरुषार्थे पुरुषं प्रवर्तयितुम-शक्तत्वेन, आख्यातोपात्तायाः अर्थभावनायाः भाव्यापेक्षायां समानपदोपात्तत्वे-नान्तरङ्गमपि यागं क्लेशात्मकमतिक्रम्य भिन्नपदोपात्तस्यापि स्वर्गस्यैव भाव्यत्वेनान्वयः इति षष्ठे स्वर्गकामाधिकरणे *(6-1-1)* व्युत्पादितम् ॥

---

**तेन पशुधर्माणां दैक्षपश्वङ्गता ॥ सवनीयस्योत्पत्तिः सौत्ये पंचमेऽहन्येव न तु चतुर्थेऽहनि। अतस्तस्यावान्तरप्रकरणमनुष्ठानसन्निधिश्च नास्ति। "वाजपेयस्य" - इतिवन्निर्देशाभावेनायोग्यत्वात् ज्योतिष्टोममहाप्रकरण-मपि न पशुधर्मग्राहकम्। येनानर्थक्यतदङ्गन्यायेन पशुत्रयार्थता शङ्क्येत ॥ एतच्च सर्वं "तुल्यः सर्वेषां पशुविधिः" *(3-6-18)* इत्यधिकरणे स्फुटम् ॥**

अन्यथा तादृशविधिश्रुत्यभावे तन्न सिद्ध्येत्। अन्तरङ्गस्य [१] यागस्यैव प्रथममर्थभावनाभाव्यत्वेनान्वये सति स्वर्गकामशब्दस्य क्रियाभिधानादेव तत्कर्तृत्वेनाक्षिप्तं पुरुषमनूद्य, समुद्र [२] मनोध्यानवत् तत्संस्कारात्मकस्वर्गकामनारूपविशेषणविधायकत्वोपपत्तेः इति ॥ प्रवर्तकत्वमन्तरेणार्थाभिधानमात्रव्यापारवती श्रुतिरभिधात्री [1]। यथा "ग्रहं सम्मार्ष्टि" -इत्यत्र ग्रहश्रुतिः। तया हि इतरनैरपेक्ष्येण सोमपात्रविशेषः अभिधीयते। अत एव तदभिहितस्य विशेषस्यैव सम्मार्गक्रियाकर्मत्वेनान्वयात् सोमावसेकनिर्हरणप्रयोजनाय तदुपायापेक्षायां सामर्थ्यलभ्यस्यापि सोमपात्रसामान्यस्य तत्कर्मत्वेन नान्वयः इत्युक्तं चमसाधि [३] करणे *(3-1-8)* ॥ विनियोगशब्दितशेषशेषिभावबोधिका श्रुतिः विनियोक्त्री। सा च त्रिविधा। एकप्रत्ययरूपा, एकपदरूपा, विभक्तिरूपा च। तत्र एकप्रत्ययरूपा यथा "पशुना यजेत" इति। अत्र हि तृतीयाविभक्तिरूपप्रत्ययोपात्तं करणकारकं प्रति तदुक्तस्यैवैकत्वस्य शेषत्वोपनायिका श्रुतिः व्युत्पादिता चतुर्थे [४] पश्वेकत्वाधिकरणे *(4-1-5)*।

---

१. एकपदोपात्तत्वाद्यागः भिन्नपदोपात्तात् बहिरङ्गात् स्वर्गादन्तरङ्गः ॥ २. "बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत्, उच्चैर्गेयम्" — इत्यत्र विहितं समुद्रमनोध्यानम्। एतच्च नवमे "एकार्थत्वादविभागः स्यात्" *(9-2-46)* इत्यधिकरणे व्यक्तम् ॥ ३. तत्र हि एकत्ववत् ग्रहत्वस्याप्यविवक्षा, लिङ्गादेव ग्रहचमससाधारण्यं, यवेष्विव एकापूर्वसाधनत्वेन व्रीहिधर्माणाम् इत्याशङ्क्य ग्रहत्वविवक्षायां एकत्वविवक्षायामिव वाक्यभेदाभावात्, ज्योतिष्टोमापूर्वैक्येपि तत्तद्भ्यासापूर्वाणां भेदात् "पयसा मैत्रावरुणं श्रीणाति" इतिवत् ग्रहजन्यापूर्वसाधनत्वस्यैव लक्षणोपपत्तेः न चमसेषु संमार्ग इति सिद्धान्तितम् ॥ ४. तत्र हि भावनान्वितकारकविशेषणविशेषणस्यै

---

**1** प्रतिपादिता श्रुतिशब्द

एकपदरूपा यथा, "यजेत" इत्यत्र हि प्रकृतिप्रत्ययात्मके एकस्मिन् पदे प्रत्ययोक्तां भावनां प्रति प्रकृत्युक्तस्य यागस्य, करणतया शेषता व्युत्पादिता स्वर्गकामाधिकरणे ५ *(6-1-1)*॥ तृतीया तु द्विविधा। शेषित्वबोधिका शेषत्वबोधिका च। तत्राद्या "व्रीहीन्नवहन्ति" इत्यत्र द्वितीया, "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति" इत्यादौ चतुर्थी च। तत्रावहननक्रियया आप्तुमिष्टतमत्वरूपकर्मत्वात्मकस्य शेषित्वस्य द्वितीययाभिधानात्, अवहननक्रियां प्रति व्रीहीणां प्राधान्यमिति द्वितीये "तानि द्वैतधिकरणे ६ *(2-1-4)* निरूपितम्॥ दीयमानदण्डरूपेण कर्मणाभिप्रेयमाणत्वरूपसम्प्रदानात्मकस्य शेषित्वस्य चतुर्थ्या-

---

कत्वस्य, आरुण्यस्य करणकारकद्वारा भावनान्वयसिद्धान्तपरारुणाधिकरणसिद्धव्युत्पत्तिबलात् अविवक्षामाशङ्क्य पशोरिव संख्याया अपि कारकद्वारा भावनान्वयस्यैव स्वीकारात् आरुण्यवत् संख्यायाः द्रव्यान्वयस्य पार्ष्ठिकत्वात् समानाभिधानश्रुतेरेकपदश्रुत्यपेक्षया बलीयस्त्वात्, भावनान्वयिसंख्यायाः केवलविशेषणत्वेन विशेषणविशेषणत्वाभावात् विवक्षितत्वम्॥ "एकां गां दद्यात्"—इत्यत्र एकपदं तु दानाश्रितस्यैकत्वस्य गोरुद्देशेन विधानाय न व्यर्थम्। अत एव "धेनुर्दक्षिणा"—इतिवत् संख्यायाः द्वादशशतत्वस्याश्वादीनां च सर्वेषां निवृत्तिर्न॥ "कार्णा याम्याः, अवलिप्ता रौद्राः, नभोरूपाः पार्जन्याः, तेषामैन्द्राग्नो दशमः"—इत्यादिलिङ्गदर्शनमप्युपपद्यते॥ इत्युक्तम्॥

५. यद्यपि स्वर्गकामाधिकरणे स्वर्गस्यैव विधिश्रुत्यनुसारेण भावनाभाव्यत्वं, न तु यागस्य इति भाव्यत्वाभाव एव व्युत्पादितः अथापि भावार्थाधिकरणन्यायेन करणत्वेन अन्वयव्युत्पादने तात्पर्यम्॥ तत्र हि "भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत, एष ह्यर्थो विधीयते" इति सूत्रेण धात्वर्थः विधेयफलभावनाविशेषणत्वेन करणतया संबध्यते, न तु द्रव्यगुणादिरूपनामार्थः इति स्पष्टमुक्तम्॥ ६. "तानि द्वैधं गुणप्रधानभूतानि। यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात्। यैस्तु द्रव्यं चिकीर्ष्यते, गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात्॥ *2-1*-६, ७, ८, सूत्राणि द्रष्टव्यानि॥

भिधानात् दीयमानदण्डं प्रति मैत्रावरुणस्य प्राधान्यमिति चतुर्थे "प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात्" *(4-2-16)* इत्यधिकरणे [७] *(4-2-6)* निर्णीतम्॥ शेषत्वबोधिका तु "स्फ्येनोद्धन्ति" इत्यादौ तृतीया। "मूलतश्शाखां परिवास्योपवेषं करोति" इत्यत्र पञ्चमी। "वेद्यां हवींष्यासादयति" इत्यत्र सप्तमी च। तत्र स्फ्यस्य साधकतमत्वात्मककरणत्वाभिधायितृतीयया उद्धननक्रियां प्रति शेषता निर्णीता 'द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत"[१] *(3-1-11)* इत्यधिकरणे *(3-1-5)*॥ पलाशशाखामूलस्य परिवासनशब्दितछेदनापादानतया छेदनसाध्यमग्रं प्रति शेषता चतुर्थे "शाखायां *(4-2-9)* तत्प्रधानत्वात्" [२] इत्यधिकरणे, *(4-2-3)* सप्तम्या अङ्गप्रधानहविरधिकरणतया तच्छेषता "प्रकरणविशेषादसंयुक्तं प्रधानस्य" *(3-7-1)* [३] इत्यधिकरणे *(3-7-1)* च वर्णिता॥

---

**७. इदं च प्राचां मतेन। नव्यास्तु प्रैषानुवचनोपयोगिदण्डसंस्कारकत्वमेव दानस्येति दण्डस्यापि ईप्सितकर्मत्वमेव। नत्वेतावता दण्डप्रतिपत्तित्वं प्रासनवत्, उपयोक्ष्यमाणसंस्कारस्य न्याय्यत्वात्, मैत्रावरुणस्य तु संप्रदानत्वेनैवान्वयः। सत्रे प्रैषादौ दण्डैकत्वं तु "दण्डी प्रैषानन्वाह" इत्यत्र प्रथमातिक्रमे कारणाभावात् एकवचनान्तेन व्युत्पत्तिमङ्गीकृत्य समर्थनीयमिति चाहुः॥**

**१. तत्र हि एतानि वै दश "यज्ञायुधानि"—इति वाक्येन स्फ्यादीनां शक्यक्रियासामान्याङ्गत्वमाशङ्क्य अश्रुतविधिकमेकं वैशब्दोपबद्धमनुवादकम्, "स्फ्येनोद्धन्ति, कपालेषु पुरोडाशं श्रपयति, अग्निहोत्रहवण्या हवींषिनिवपति"...इत्यादिवाक्यानि बहूनि क्रियाविशेषं प्रति द्रव्यविशेषस्य शेषत्वबोधकानीति सिद्धान्तितम्॥ २. तत्र हि सार्वविभक्तिकतसिना, मूलस्य द्वितीयार्थेन प्राधान्यात् परिवासनं मूलाग्रोभयप्रयुक्तमित्याशङ्क्य विशिष्य पञ्चम्यर्थकतसिप्रत्ययानुशासनबलात् पञ्चम्या परिवासनं प्रति गुणत्वमेव मूलस्येति शाखामात्रसंस्कारकं परिवासनं तन्मात्रप्रयुक्तमिति सिद्धान्तितम्॥ ३. तत्र हि वेदिबर्हिषी, तद्धर्माश्च खननलवनादयः अप्रतिबद्धफलवत्प्रधानाधिकाराख्यप्रकरणतात्पर्यग्राहकबलात् प्रधानापूर्वाङ्गहविरर्थत्वमित्याशङ्क्य प्रकरणेन**

षष्ठी द्विविधा। शेषित्वबोधिका शेषत्वबोधिका च। तत्राद्या "राजन्य-वासिष्ठादीनां नाराशंसो द्वितीय. प्रयाजः, तनूनपादन्येषाम्" इति। तत्र[1] राजन्यवासिष्ठादीन् स्वामित्वेनोद्दिश्य तादर्थ्येन नाराशंसादिर्विधीयते इति षष्ठे "सन्निपातेऽवैगुण्यात्" *(6-6-1)* इत्यधिकरणे १ *(6-6-1)* दर्शितम्॥ द्वितीया

---

वाक्यसंकोचायोगात्, स्वर्गादिवत्संबन्धमात्रविवक्षया वा अङ्गप्रधानसर्वहविरर्थता सिद्धान्तिता॥

१. अत्र हि एकदेशप्रवृत्तिनिमित्तनामधेयं, अग्निहोत्रवैश्वदेवादिपदवदङ्गीकृत्य, विहितस्य द्वितीयप्रयाजस्य क्रमे शाखाभेदेन समाम्नातयोः, नराशंसतनूनपान्मन्त्रयोः, अव्यवस्थया विकल्पेन द्वितीय प्रयाजसंबन्धित्वेन प्राप्तयोः, वासिष्ठसम्बन्धमात्रं नराशंसस्य क्रियते। अत एव नाराशंस इति तद्धितः, द्वितीयपदं, प्रयाजपदं, चानुवादः॥ ततश्च परिशेषादेव तनूनपान्मन्त्रे अन्यसंबन्धसिद्धेः, "तनूनपादन्येषाम्"—इत्यपि "षोडश्युत्तरे" इतिवदनुवाद एव। पशुप्रकरणे आप्रिसूक्ते वैकृतनराशंसमन्त्रपाठेऽपि "नराशंसोऽग्नय आज्यस्य वेतु" इत्यस्य दर्शपूर्णमासप्रकरण एव पाठः॥ द्वितीयत्वादिविशिष्टप्रयाजान्तरस्य वासिष्ठसंबन्धित्वेन विधानपक्षस्तु विशिष्टविध्यपूर्वविधिकर्मान्तरकल्पनागौरवप्रसंगात् तनूनपाद्यागबाधे प्रमाणाभावाच्च हेय एव॥ एवं चास्ति कल्पभेदः। स च दीक्षणीयादिद्वारा अनेककर्तृकेषु सत्रादिषु प्राप्तः। तत्र सत्रादौ भिन्नकल्पानामप्यधिकारः उत समानकल्पानामेव इति विशये शुद्धवासिष्ठार्थत्वे प्रकरणबाधः, क्रतुयुक्तपुरुषार्थत्वे परिसंख्यापत्तिः, अतः नराशंसमन्त्रमुद्दिश्य वसिष्ठस्य कर्तृत्वविधिः। स च "विश्वामित्रो होता"—इति वचनेन हौत्रे विश्वामित्रविधानान्न साक्षात्कर्ता। अपि तु यजमानस्य प्रयोजककर्तृत्वात्, तत्परिच्छेदकतया वासिष्ठविधिः। एवं च सत्रे औदुम्बरीसम्मानवत एकवासिष्ठकर्तृकत्वेऽपि अन्येषां यजमानानां वैगुण्यानपत्तेः भिन्नकल्पानामप्यधिकारः इति पूर्वपक्षस्य सिद्धान्तितम्॥ नियमविधिलाघवाय

---

[1] तत्र हि

"यजमानस्य याज्या" इति। अत्र याज्याविशेषे[२] यजमानः कर्तृतया तदङ्गत्वेन विधीयते इति "याज्यापनयेनापनीतो भक्षः प्रवरवत्" *(3-5-44)* इत्यधिकरणे *(3-5-17)* दर्शितम्॥ [३] प्रथमान[1] शेषित्वस्य बोधिका, नापि शेषत्वस्य, प्रातिपदिकार्थमात्रे तस्यानुशासनात् इति सा नोदाहृता॥ एवं श्रुतिर्निरूपिता॥

अथ लिङ्गादिस्वरूपं निरूप्यते। वस्तुसामर्थ्यं लिङ्गम्। तच्च[2] द्विविधम्। शब्दसामर्थ्यमर्थसामार्थ्यं च। तत्र "बर्हिर्देवसदनं दामि" इत्यादिमन्त्राणां बर्हिर्लवनप्रकाशनशक्तिरूपेण शब्दसामर्थ्येन बर्हिर्लवने विनियोगः मन्त्राधिकरणे *(1-2-4)* दर्शितः॥ "स्वाध्यायोऽध्येतव्यः" इत्यत्र, अध्ययनस्य अर्थज्ञानजननशक्तिरूपेणार्थसामर्थ्येनार्थज्ञाने विनियोगः जिज्ञासासूत्रे *(1-1-1)*

---

वासिष्ठोद्देशेनैव प्रमाणान्तरवशात् वासिष्ठाभिलषितफसाधनीभूतदर्शपूर्णमासाङ्गभूतद्वितीयप्रयाजद्वारा नराशंसमन्त्रविनियोगविधिः,विनियगाभावादेव अवासिष्ठेषु मन्त्रस्य निवृत्या परिसंख्याफलकत्वं न वक्यस्य॥ अतश्च भिन्नकल्पानामप्यधिकारे एकाङ्गभूतमन्त्रपाठे इतरेषां फलानापत्तेः, समानकल्पानामेवाधिकारः इति॥ २. तत्र हि - "यजमानस्य याज्या, सोऽभिप्रेष्यति, होतरेतद्यजेति, स्वयं वा निषद्य यजति" - इति वाक्यमुदाहृत्य, प्रथमवाक्येन याज्यामात्रे यजमानस्य कर्तृत्वविधानात् वषट्कारभयक्षयोः होतैव कर्ता इत्याशङ्क्य याज्यावषट्कारयोः समानकर्तृत्वस्य, अनवानस्योभयोर्बाधापेक्षया, वषट्कारे होतृकर्तृकत्वस्यैकस्य समाख्याप्रमाणकस्य बाधो वरमिति वषट्कारभक्षयोः ऋतुयाज्यास्वन्त्ययाज्याकर्ता यजनान एव कर्तेति सिद्धान्तितम्॥ इद च प्राचां मतेन। नव्यमते "स्वयं वा निषद्य यजति"—इति वाक्यस्यैव विधित्वेनाद्यस्यार्थवादत्वसिद्धान्तात्॥ ३. यद्यपि "अभिहितकारकवाचिनी प्रथमा"—इति वार्तिकमतेन स्वाध्यायस्य, मैत्रावरुणस्य च कर्मत्वं कर्तृत्वं च

---

1 प्रथमा तु 2 तत for तच्च

दर्शितः॥ पदसङ्घातो वाक्यम्। तत् द्विविधम्। मन्त्रवाक्यं ब्राह्मणवाक्यं च। तत्राद्येन "देवस्य त्वा सवितुः प्रसवे, अश्विनोर्बाहुभ्यां, पूष्णो हस्ताभ्याम्" इत्यस्य निर्वापे विनियोगः। तत्र हि "अग्नये जुष्टं निर्वपामि" इत्युत्तरभागस्य लिङ्गान्निर्वापविनियोगे स्थिते, "देवस्य त्वा"—इत्यादि पूर्वभागस्य तथाविधलिङ्गरहितस्यापि तदेकवाक्यतया समभिव्याहृतत्वादेव, कथंचिन्निर्वापप्ररोचनार्थतया निर्वापविशेषणीभूतार्थप्रकाशकस्य सतः, तत्रैव विनियोगः इति "अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् *(9-1-36)*" इति नावमिकाधिकरणे प्रदर्शितम्॥ द्वितीयेन "यजेत स्वर्गकामः"—इत्यत्र यागस्य स्वर्गं प्रति *(9-1-12)* शेषता इति स्वर्गकामाधिकरणे *(6-1-1)* व्युत्पादितम्॥ अत्र यागे शेषत्वबोधकतृतीयायाः, स्वर्गे शेषित्वबोधकद्वितीयायाः वा अभावात् न विनियोगस्य श्रौतत्वं शङ्कनीयम्॥ इतिकर्तव्यताकाङ्क्षा[1] प्रकरणम्। तत् द्विविधम्। महाप्रकरणमवान्तरप्रकरणं च॥ तत्राद्येन प्रयाजादेर्दर्शपूर्णमासशेषता "असंयुक्तं प्रकरणात्"[1] *(3-3-11)* इत्यधिकरणे दर्शिता। द्वितीयेन "अभिक्रामं जुहोति" इत्यादिवाक्य-

---

प्रथमयाभिधीयते. अथापि वैयाकरणमत इव आख्यातस्य कर्तृकर्मवाचकत्वाभावात्, मीमांसकमते तल्लक्षकत्वस्यैव स्वीकारात्सूत्रमताश्रयणम्॥

१. उभयाकाङ्क्षा प्रकरणमिति प्राचीनाः। वस्तुतस्तु अवगतफलसंबन्ध, सन्निहितवाक्यप्रमित, पदार्थवृत्ति यत्पूर्वप्रमाणानवगताङ्गताकविषये इतिकर्तव्यतात्वप्रकारकापेक्षणं तत् प्रकरणमिति कौस्तुभनिरुक्तं बोध्यम् प्रयाजादेः, विकृतियागस्य, श्रुति लिङ्गवाक्यप्रमाणप्रमितस्य च व्यावृत्त्यर्थं तत्तद्दलनिवेशनम्॥ तथा च "स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनस्संहत्य जायते॥" इति वार्तिकोक्तदिशा प्रयाजादिवाक्यानां दर्शादिवाक्यानां चैकवाक्यताकल्पनया, "समिद्यागादिभिरुपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गंभावयेत्" इत्यर्थोऽवगन्तव्यः॥

विहिताभि[२] क्रमणादेः प्रयाजशेषता "कर्तृगुणेतु कर्म समवायात्" (3-1-19) इत्यधिकरणे (3.1-10) दर्शिता ॥ तुल्यप्रदेशत्वं स्थानम्। तत् द्विविधम्। पाठसादेश्यमनुष्टानसादेश्यं च। आद्यमपि द्विविधम्। यथासंख्याम्नानं सन्निध्याम्नानं च। तत्राऽऽग्नेयाग्नीषोमीयानुमन्त्रणमन्त्रयोः "अग्नेरहं देवयज्ययान्नादो भूयासम्" "अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्" इत्यनयोर्मध्ये पटितस्य "दब्धिरस्यदब्धोभूयासम्" इति मन्त्रस्य आग्नेयाग्नीषोमीययागयोर्मध्ये अनुष्टेयोपांशुयाजे विनियोगः "क्रमश्च (3-3-12) देशसामान्यात्" [३] इत्यधिकरणे (3-3-5) दर्शितः ॥ सान्नाय्य-

---

२. अत्र भाष्कारेण तावत् अभिक्रमणस्यामूर्तत्वात् जुहोत्युपात्ते प्रयाजहोमे अन्वयानुपपत्तेः, आरुण्यवच्चेह कर्तृरूपस्य द्रव्यस्यानुपादानात् तद्द्वाराप्यन्वयानुपपत्तेः, ततो विच्छिन्नस्य प्राकरणिक सर्वहोमाङ्गत्वमित्याशङ्क्य, आख्यातगम्यस्य कर्तुः सद्भावात् तत्—द्वारा जुहोत्यन्वयोपपत्तेः विच्छेदाभावेन प्रयाजहोममात्राङ्गत्वमिति सिद्धान्तितम् ॥ तदेतत् अरुणाधिकरणेन गतार्थमिति वार्तिककारेण सन्दंशप्रतिपादनपरतया अधिकरणमन्यथा व्याख्यातम् ॥ प्रयाजाद्यङ्गभावनानामपि भावनात्वसामान्यादस्त्येव इतिकर्तव्यताकाङ्क्षा क्रतूपकारभाव्यकानाम्। सा परं प्रधानगतफलवत्वेन प्रतिबध्यते सन्निध्याम्नानविषये। अतो न परस्पराङ्गत्वप्रसंगः। वाचनिकाङ्गानामुत्तेजकविधया प्रतिबद्धाकाङ्क्षोज्जीवकता। तत्रापि मण्यादाविव व्यभिचाराभावान्न प्रत्येकमुत्तेजकता, तावद्भावकूटप्रवेशे गौरवाच्च, अपि तु आद्येनाकाङ्क्षोज्जीवनमन्तिमेन तन्नाशः इत्येव कल्प्यते। एवं चावाचानिकस्यापि :मध्यगतस्य प्रतिबन्धकाभावात् अङ्गाङ्गत्वमभिक्रमणादेरिति ॥

३. स्थानं नाम "इति कर्तव्यतात्वेनायोग्यसम्बन्धयोर्वाक्यार्थ-

पात्र सन्निधौ समाम्नातस्य "शुन्धध्वं" इति मन्त्रस्य सान्नाय्यपात्रशुद्धौ विनियोगः बलाबलसूत्रविषये स्थानसमाख्याधिकरणे दर्शितः। अनुष्ठान सादेश्येन ज्योतिष्टोमे पशुधर्माणामग्नीषोमीयपशुशेषता "तुल्यः *(3-6-18)* सर्वेषां पशुविधिः" *(3-6-7)* इत्यधिकरणे दर्शिता। समाख्या यौगिकी संज्ञा। सा हि द्विविधा। लौकिकी वैदिकी च। तत्रावघातादिपदार्थेष्वाध्वर्यवादिसंज्ञा लौकिकी। तया तेष्वध्वर्य्वादीनां कर्तृत्वेन विनियोगः *(3-3-13)* "आख्या चैवं तदर्थत्वात्"[४] इत्यधिकरणे *(3-3-6)* दर्शितः। होतृचमसादिसमाख्या वैदिकी। तया होत्रादेश्चमसभक्षणशेषता "चमसेषु *(3-5-22)* समाख्यानात्"[५] इत्यधिकरणे *(3-5-6)* दर्शिता॥ ननु द्विविधस्य प्रकरणस्य सन्निध्याम्नानानुष्ठानसादेश्यरूपस्थानयोश्च को भेदः? उच्यते। प्रधानस्य

---

योरसन्निधिः। इति कर्तव्यतात्वेनायोग्यत्वं च द्वेधा, क्वचिदाकाङ्क्षाविरहात्, यथा विकृतेरुपहोमादिविषये, क्लृप्तोपकारप्राकृताङ्गैरेव निराकाङ्क्षत्वात्। क्वचिदव्यापारात्मकत्वात्, यथा जपादिमन्त्रादौ। अत्र चैकवाक्योपात्तव्रीहियागादिसन्निधेरपि तथात्वापत्तेर्वाक्यार्थेत्युक्तम्। प्रयाजादीनां स्थानविषयत्वापत्तिनिरासार्थमाद्यं विशेषणम्॥

४. सर्वत्र क्लृप्तावयवशक्तिकं द्विविधं पदम्। प्रकृतविधौ वाक्यार्थान्वय्यर्थकं, तद्भिन्नं चेति। तत्राद्यं "निर्मन्थ्येनेष्टकाः पचन्ति" "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति" इत्यादौ निर्मन्थ्यादिपदम्। तत्र वाक्येनैव मन्थनादीनां पाकाङ्गत्वान्न सामाख्यानिको विनियोगः। द्वितीयं तु "आध्वर्यवमधीते" "प्रैतु होतुश्चमसः" इत्यादौ, सामाख्यानिकविनियोगात्॥ विशेष्यस्य काण्डस्यैव प्रकृतविधावन्वयात्॥

५. अदनार्थस्य, चमु भक्षणे इति धातोः अधिकरणवाचकः औणादिकोऽसुच प्रत्ययः। सोमश्चम्यतेऽस्मिन्निति व्युत्पत्तिः। यदि उणादयोऽव्युत्पन्नाः इति पक्षः आश्रीयते तदा चमसपदस्य पात्रे रूढत्वात् योग्यतयैव होतृचमसादिसम्बन्धः भक्ष्यभक्षकत्वादिसंबन्धेनैव इति तया

दर्शपूर्णमासादेरितिकर्तव्यताकाङ्क्षा महाप्रकरणम्। इति शब्दः प्रकार-वचनः। कर्तव्यतेति क्रियोच्यते। यागेन स्वर्गम्भावयेदित्युक्ते, न ज्ञायते यागस्य क्रियाप्रकारः। अतस्तत्राकाङ्क्षा भवति। सेयमितिकर्तव्यता-काङ्क्षा। अनया क्लृप्तया दर्शपूर्णमासन्निध्याम्नातस्य प्रयोजनाकाङ्क्षस्य प्रयाजादेः, योऽयं तदितिकर्तव्यतारूपेणान्वयः असौ महाप्रकरणसाध्य उच्यते। एवमेव यद्यप्यङ्गानामपि प्रयाजादीनामनिर्ज्ञातकर्तव्यताप्रकारत्वात् सन्ति इतिकर्तव्यताकाङ्क्षाः, तथापि तासां फलवत्प्रधानभावनेतिकर्तव्यता-काङ्क्षाभिभूतत्वान्न ताः कार्याय प्रभवन्ति। अत एव प्रयाजाज्यभागादीनां दर्शपूर्णमासेतिकर्तव्यतारूपेणैवान्वयो न परस्परेतिकर्तव्यतारूपेण। अतो यत्राङ्गानां पूर्वं पश्चाच्च वाचनिकगुणविधानेन संदंशस्तत्रैव तदितिकर्त-व्यताकाङ्क्षा कार्यकरीति अवान्तरप्रकरणमिष्यते। यथोदाहृते "अभि-क्रामन् जुहोति" इत्यत्र। अत्र हि प्रयाजादीन् विधाय, ' समानयते उपभृतः" इत्यादिगुणं च विधाय "अभिक्रामन् जुहोति" इत्युक्त्वा, पुनरपि "यो वै प्रयजानां मिथुनं वेद" इत्यारभ्य, "प्रयाजानिष्ट्वा हवींष्यभिघारयति" इति पर्यन्तं प्रयाजपरामर्शदर्शनेन, नूनमेतावता प्रदेशेन प्रयाजाः समाप्यन्ते इत्यवगम्यते। यत्र तु नैवं वाचनिकगुणसन्दंशः, किन्तु सन्निधौ आम्नानलक्षणस्थानप्रमाणमात्रम्, यथा "शुन्धध्वं" इति मन्त्रस्य, यस्य तु न सन्निधानेऽप्याम्नानं, किन्त्वन्यत्रोत्पन्नस्य वचना-दन्यत्रानुष्ठेयस्य सतः, अनुष्ठानप्रदेशे कस्यचित्समाम्नानं, यथा प्रायणीयेऽहनि राजक्रयसन्निधौ "यदग्नीषोमीयं पशुमालभते" इत्युत्पन्नस्याग्नीषोमीयस्य, "स एष औपवसथ्येऽहनि द्विदैवत्यः पशुरालभ्यते" इति वचनादन्यत्रानुष्ठे-यस्य, अनुष्टानप्रदेशे औपवसथ्येऽहनि पशुधर्माणां समाम्नानं, तत्रानुष्ठानस्य साद्गुण्यमात्रमित्येतेषां भेदः इति ॥

एषां श्रुतिलिङ्गादीनां विरोधे पारदौर्बल्यमुक्तं "श्रुतिलिङ्गवाक्य-प्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" *(3-3-14)* इत्यत्र ॥ तदुदाहरणमुखेन प्रदर्शयामः। तत्र श्रुतिलिङ्गविरोधे इदमुदाहरणम्—महाचयने "निवेशनः संगमनो वसूनां" इत्येषा ऋगाम्नायते। तत्रैव तस्य विनियोजकं ब्राह्मणमेवमाम्नायते - "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इति। तत्र संशयः, किमनया ऋचा इन्द्रस्योपस्थानं कर्तव्यं, उत गार्हपत्यस्य इति। ऋचः इन्द्रप्रकाशनशक्तिरूपेण लिङ्गेन इन्द्रोपस्थानशेषत्वस्य, तृतीया-श्रुत्या गार्हपत्योपस्थानशेषत्वस्य च प्रतीतेः, श्रुतिलिङ्गयोर्बलाबलपरिज्ञाने विचारो भवति। तत्र विनियोज्यवस्तुशक्त्यनुसारेण विनियोगस्य वर्णनीयत्वात्, इन्द्राभिधायिकायाः ऋचः, अग्निप्रकाशने शक्त्यभावात्, अशक्येऽर्थे श्रुत्या विनियोक्तुमशक्यत्वात्, लिङ्गानुसारेण इन्द्रोपस्थानशेषतैव युक्ता [1]। गार्हपत्य-

---

भक्षणसिद्धिरविकला ॥ होतृब्रह्मोद्गातृयजमानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां स्वस्वचमसेषु समाख्यया भक्षणम्। सदस्य-पक्षे तस्यापि स्वचमसे ॥

१. "कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे"—इति ऐन्द्री-मन्त्रः उपादातुमुचितः। यतः "निवेशनः"—इति मन्त्रे, इन्द्रो न इन्त्र इवेत्यर्थात्, नञः उत्तरत्र विद्यमानस्योपमार्थकत्वप्रसिद्धेः, "नेन्द्र" इत्यत्र पूर्वंगतनञः निषेधार्थकत्वस्य स्पष्टं प्रतीतेश्च, अपि च "वसूनां पावकश्चास्मि" इत्यादि प्रमाणबलात्, वसूनामष्टानां मध्ये पावकः संगमयिता निवेशयिता इत्यर्थानुगुण्याच्चाग्निप्रतिपादकलिङ्ग-मेव निवेशनमन्त्रस्येति ध्येयम्॥ नेदं लिङ्गवाक्यविरोधोदाहरणं भवितु-मर्हति। यतः वाक्यस्योद्देश्यमात्रसमर्पकत्वेन श्रुतिसहकारि-त्वेऽपि कृतिकारकत्वबोधकत्वरूपविनियोजकत्वाभावात्॥ प्रकरणन्तु अपूर्वसाधनत्वलक्षणतात्पर्यग्राहकमात्रम्॥ न तु तदपि विनियोजकं

शब्दस्तु यज्ञसाधनत्वादिसाधर्म्यात् इन्द्र एव वर्तयितव्यः इति पूर्वपक्षे सिद्धान्तः। श्रुत्येव न साक्षात् लिङ्गेन शेषत्वं प्रतिपाद्यते। किन्तु मन्त्रेण मन्त्रार्थे प्रतिपादिते, कार्यतो मन्त्रस्य विनियोगाकाङ्क्षावशेन, लिङ्गेनेन्द्र-शेषत्वप्रतिपादकश्रुतिकल्पनया। न च लिङ्गेन साक्षाद्विनियोगकल्पनसंभवे तेन विनियोजकश्रुतिकल्पनवैयर्थ्यम्। सर्वस्याप्यङ्गविधेः प्रयोगविधिपरिग्रहं विनानुष्ठापकत्वायोगात्, अशाब्दस्य च शाब्देनान्वयायोगात्, प्रयोगवाक्य-पूरणाय, श्रुतेरेव कल्पनीयत्वात्। एवं च यदा लैङ्गिकेन्द्रविनियोगकल्पना-

---

गौरवात्॥ इदं श्रुत्योर्विरोधेऽप्युदाहरणं भवितुमर्हति। "ऐन्द्र्या"—इति तद्धितश्रुत्या - इन्द्राङ्गत्वमुत तृतीयाश्रुत्या गार्हपत्याङ्गत्वमिति संदेहास्पदत्वात्॥ तद्धितश्रुतेः सूक्ततद्धितत्वेन प्राधान्येन कृतिकारक-वाचित्वाभावात् तादृशतृतीयातः दौर्बल्यात्॥ न चाङ्गानां प्रकृत्यर्थत्वेन निराकाङ्क्षाणामपि विकृत्याकाङ्क्षयैवातिदेशकल्पनवदिन्द्रोपस्थाना-काङ्क्षयैव लिङ्गस्य श्रुतिकल्पकत्वोपपत्तिः, तस्य ध्यानाद्युपाया-न्तरेणापि स्मृतिसिद्धेः नियमेन विकृतिवदनाकाङ्क्षत्वात्॥ अतः श्रुत्या गार्हपत्याङ्गत्वमेव॥ न च श्रुतेः करणत्वमात्राभिधायकत्वेन गार्हपत्यनिरूपितत्वस्य वाक्याधीनत्वान्नायं श्रुतिलिङ्गविरोधः इति वाच्यम्। तथात्वेऽपि ब्राह्मणवाक्यत्वेन मन्त्रलिङ्गापेक्षया "यद्यप्यन्य-देवत्यः पशुः" इतिवत्प्रबलत्वोपपत्तेः॥ वस्तुतस्तु यथा न केवलया श्रुत्या विरोधः, नैवं वाक्येनापि, तस्यापि गार्हपत्यसमीपे इत्येवमुप-पत्तेः, अतश्चोभयविरोधसत्वेऽपि "प्रधानेन व्यपदेशा भवन्ति" इति न्यायेन श्रुतिलिङ्गविरोधोदाहरणमिति सम्यगेव॥ "उपान्मन्त्रकरणे" इत्यनुशासनबलात् आत्मनेपदानुरोधेन, मन्त्रकरणकाभिधाने लक्षणाया आवश्यकत्वात्, समीपस्थितिं वाच्यार्थं प्रति गार्हपत्यस्य प्रति-योगित्वेनान्वयो न घटते॥ अधिकं तु अत्र (3-2-2) अधिकरणे भाट्टदीपि-कायां द्रष्टव्यम्॥

प्रणाडयां प्रथमपर्वतया मन्त्रेण मन्त्रार्थः प्रतिपाद्यते, तदैव "ऐन्द्र्या" इति श्रुतिः मन्त्रस्य गार्हपत्यार्थतां प्रतिपादयतीति प्रथमावगतश्रौतविनियोगेन मन्त्रस्य नैराकाङ्क्ष्यात्, न तदनन्तरं लैङ्गिकविनियोगकल्पनावसरः। न चाशक्येऽर्थे विनियोगासंभवः। मन्त्रस्य गार्हपत्ये मुख्यसामर्थ्याभावेऽपि गौणसामर्थ्यसत्वात्, अवश्यं हि मन्त्रस्थेन्द्रशब्दस्य वा ब्राह्मणस्थगार्हपत्य-शब्दस्य वा कस्यचित् गौणत्वं कल्पनीयम्। तत्राप्राप्तार्थे ब्राह्मणे गौणत्व-कल्पनाद्वरं प्राप्तार्थे मन्त्रे एव गौणत्वकल्पनम्। तस्मात् श्रुत्या लिङ्गबाधात् गार्हपत्योपस्थानमेव कर्तव्यमिति इन्द्रशब्दसामर्थ्यात्मकस्य लिङ्गस्य श्रुति-विरोधे उदाहरणम्॥ अर्थसामर्थ्यात्मकस्य तु तद्विरोधे उदाहरणं द्वाद-शाध्याये "विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात्" *(12-2-1)* इत्यधिकरणे *(12-2-1)* द्रष्टव्यम्॥ तत्र हि [१] गार्हपत्यादयोऽग्नयः पचन-प्रकाशनादीनां लौकिककार्याणामङ्गं, तदुत्पादनसामर्थ्यात्मकाल्लिङ्गात् इति प्राप्ते "गार्हपत्ये हवींषि श्रपयति" "आहवनीये जुहोति" "दक्षिणाग्ना-वन्वाहार्यम्पचति" इत्यादिप्रत्यक्षश्रुतिनिर्दिष्टैरेव प्रयोजनैः निराकाङ्क्षत्वान्न लिङ्गेन तेषां पचनार्थता कल्पयितुं युक्ता इति निर्णीतम्॥ लिङ्गवाक्य-

---

१. ननु प्रत्यक्षविनियोजकवाक्यानि अभ्युत्यानुवादः, अथवा विनियो-जकत्वेऽपि कार्यान्तराणामग्न्यपेक्षाणां लाघवादेतेषामेव प्रसंगात् ग्रहणं, अग्न्यन्तराक्षेपेगौरवादिति वाच्यम्। विनियोगविधिवैयर्थ्यापत्तेः, आयतनात् बहिर्भावनिषेधात्, श्रौताग्निषु पाकादिनिषेधस्य स्मृतिषु श्रवणात्, स्मार्तेष्वौपासनाग्नेर्वाचनिकत्वात्. श्रौतेष्वेव होमादिषु विनियोगः॥ अत एव पशुबन्धं विना अन्यमांसस्पर्शनिवृत्तिलिङ्गं, लौकिकमांसस्य चान्याग्निषु पाकलिङ्गं चोपपद्यते॥ "पचन्ति ह वा अन्येष्वग्निषु वृथामांसम्" "अथैतेषां नातोऽन्या मांसाशा विद्यते"— इत्येतत् लिङ्गदर्शनं द्रष्टव्यम्॥

विरोधे "स्योनं ते सदनं करोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ॥" इति दार्शपौर्णमासिको मन्त्रः उदाहरणम्। तत्र संशयः — किं सकलोऽयम्मन्त्रः एकवाक्यत्ववशेन अविभज्य पुरोडाशस्य सदनकरणे प्रतिष्ठापने च विनियोक्तव्यः, उत, लिङ्गबलेन विभज्य कल्पयामीत्यन्तस्य सदनकरणे "तस्मिन् सीद" इति च प्रतिष्ठापने विनियोक्तव्य इति। तत्र संभवत्येकवाक्यत्वे वाक्यभेदायोगात्, तस्मिन् सीदेति पूर्वोक्तसापेक्षसर्वनामवशेन सकलस्यैकवाक्यत्वावगमाच्चाविभज्य विनियोक्तव्य, इति पूर्वपक्षे सिद्धान्तः। "सीद" "प्रतितिष्ठ" इति लिङ्गाभ्यां विभज्य विनियोक्तव्यम्। लिङ्गेन हि क्लेशेन शीघ्रं श्रुतिमनुमाय, विभज्य विनियुज्यते। एकवाक्यत्ववशेनोत्तरार्धस्यापि स्वार्थविशिष्टसदनकरणे लाक्षणिकं सामर्थ्यं कल्पयित्वा, पूर्वार्धस्यापि च स्वार्थविशिष्टपुरोडाशप्रतिष्ठापने लाक्षणिकं सामर्थ्यं कल्पयित्वा, तेन श्रुतिमनुमाय, सकलोऽप्युभयत्र विनियोक्तव्य इति विलम्बः स्पष्टः। तस्माद्वाक्याल्लिङ्गस्य बलीयस्त्वात् विभज्यैव विनियोक्तव्यः इति। शब्दसमार्थ्यात्मलिङ्गस्य मन्त्रवाक्यस्य च विरोधे इदं उदाहरणम्॥ अर्थसामर्थ्यरूपलिङ्गस्य ब्राह्मणवाक्यस्य च विरोधे उदाहरणमिदम्। षष्ठे "[1] फलार्थत्वात्

---

१. "यथाधिकारमङ्गानां विनियोगो न वर्ण्यते। यथाङ्गविनियोगं स्यादधिकारस्य वर्णनम्॥" इति सिद्धान्तः तिर्यगधिकरणेनानेन स्थापितः। ननु तिरश्चां स्वर्गादिकामना कथमिति चेन्न परकीयेच्छायाः अप्रत्यक्षत्वेन तदभावनिश्चयानुपपत्तेः, श्येनादीनामष्टमीचतुर्दश्युपवासदर्शनेन तदनुमानाच्च। साङ्गकरणसामर्थ्याभावेऽपि शक्यमात्रस्यैव करणोपपत्तेः इति प्राप्ते विनियोगप्रयोगविध्युत्तरमेवाधिकारकल्पनात् साङ्गकरणसमर्थ एवाधिकारी। देवादीनां तु विग्रहाद्यभावादेव नाधिकारः, अनादित्वात्संसारस्य पूर्वकल्पीयदेवानामुद्देश्यत्वसम्भवात्॥ ऋष्यादीनामपि पूर्वकल्पीयऋषीनादाय

कर्मणः शास्त्रं सर्वाधिकारं स्यात्" (6-1-4) इत्यधिकरणे (6-1-2) द्रष्टव्यम् ॥ तत्र हि "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्येन सर्वेषां स्वर्गकामनावतामविशेषेण यागेऽधिकारबोधनात्, अन्धमूकादीनामपि स्वर्गकामनावत्त्वाविशेषाच्च, तेषामप्यस्त्यधिकार इति प्राप्ते, साङ्गस्य क्रतोः पुरुषैः सम्बन्धात्, अङ्गभूताज्यावेक्षणविष्णुक्रमणादौ अन्धपङ्ग्वादीनामसामर्थ्यात्, सामर्थ्यानुसारेणानन्धादिभिरेव सम्बध्यते इति लिङ्गेन वाक्यस्य संकोच इति। वाक्यस्य [२] प्रकरणविरोधे "अग्नीषोमाविदं हविरजुषेतां, अवीवृधेतां, महो ज्यायोक्राताम्" इति दार्शपौर्णमासिकसूक्तवाकभेदः उदाहरणम्। तत्राग्नीषोमाविति देवतापदं लिङ्गात् पौर्णमास्यामेव प्रयोक्तव्यम् इति स्थिते, यानि तदेकवाक्यभूतानि "इदं हविरजुषेताम्" इत्यादीनि पदानि, तानि किं प्रकरणाविशेषात् पर्वद्वये प्रयोक्तव्यानि, उताग्नीषोमपदैकवाक्यत्वात्तद्वदेव व्यवस्थया पौर्णमास्यां प्रयोक्तव्यानि इति संशये-—

---

प्रवरवरणादिसम्भवादस्त्येव तेषामधिकारः। परन्तु देवानामिव ऋष्यादीनामपि अनधिकारप्रतिपादनं मूलोक्तं नाद्रियन्ते नव्याः ॥ श्रुत्योर्विरोधे तद्धितश्रुतितृतीयाश्रुतिवाक्यं यथोदाहरणं। तथा लिङ्गयोः विरोधे लवनमन्त्रस्य गौणे उलपलवने न विनियोग इत्युदाहरणं ॥ एवं वाक्ययोः विरोधे उपांशुत्वस्य "त्सरावा एषा यज्ञस्य" इति वाक्येन यज्ञपदैकवाक्यत्वात् यज्ञभागधर्मत्वं "तस्माद्यत् किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति" इत्यनेन सन्निहितयत्किंचित्पदैकवाक्यतयाऽवगतपदार्थधर्मत्वेन बाध्यते ॥

२. नेदमुदाहरणं युक्तं, श्रुतिलिङ्गविनियुक्तस्य सूक्तवाकमन्त्रस्य सिद्धरूपत्वेन मुख्यप्रकरणाविषयत्वात्, अधिकाराख्यगौणप्रकरणस्यापूर्वसाधनत्वलक्षणातात्पर्यग्राहकस्य सत्वात्तदभिप्रायेण नेयम् ॥ मुख्योदाहरणं, वैमृधस्य वाक्यावगतपौर्णमास्यङ्गत्वेन प्रकरणावगतदर्शाङ्गत्वबाधः ॥

प्रधानार्थत्वात् सर्वस्य प्रधानाकाङ्क्षारूपप्रकरणनिबन्धनो विनियोगो-बलीयान्, इति प्रकरणाविशेषात् पर्वद्वये च प्रयोक्तव्यानि, इति पूर्वपक्षे सिद्धान्तः, "इदं हविः" इत्यादेः अग्नीषोमपदैकवाक्यत्वं क्लृप्तम्। एकवाक्यतायाश्चाग्नीषोमप्रकाशनसामर्थ्यम् "इदं हविः" इत्यादेः शीघ्रं कल्प्यते। ततः श्रुतिः। तया विनियोगः इति सन्निकर्षः। अमावास्या-देवताप्रकाशकेनेन्द्राग्निपदेन "इदं हविः" इत्यादेः एकवाक्यत्वं न क्लृप्तम्। समभिव्याहाराभावात्। किन्तु प्रकरणात् दर्शपूर्णमासाभ्यां. इदं हविरित्यादेः, अनेन दर्शपूर्णमासयोरुपकुर्यात् इत्येकवाक्यतां कल्पयित्वा, ततः - कोऽस्योपकारः इत्याकाङ्क्षायां, तदीयदेवतापदैकवाक्यत्वं कल्पयित्वा, तत्प्रकाशनसामर्थ्यकल्पनापुरःसरं श्रुतिकल्पनया विनियोग कल्पनीयः इति विप्रकर्षः। तस्मात् प्रकरणाद्वाक्यस्य बलीयस्त्वात् वाक्यबलेन पौर्णमास्यामेव प्रयोक्तव्यानि इति। मन्त्रवाक्यस्य[1] प्रकरणविरोधे इदमुदाहरणम्॥

---

१. न तावदत्रवाक्ये भागशब्दलक्षितयागोद्देशेन पेषण-विधिः, एकप्रसरताभङ्गापत्तेः। पूषपदेन विशेषणे वाक्यभेदात्। क्तप्रत्ययार्थद्रव्योपसर्जनस्य पेषणस्य यागान्वयानुपपत्तेश्च। अत एव न पूषपदमेव शक्यार्थस्य लक्षितपूषदेवत्ययागस्य वोद्देश्यतापरम्। पूष्णोऽव्यभिचरितक्रतुसंबन्धाभावेन क्रतूपस्थितौ प्रमाणमपि नास्ति। अतो गुणात् द्रव्यदेवताविशिष्टकर्मान्तरं दर्शपूर्णमासाङ्गत्वेन विधीयते इति प्राप्ते सिद्धान्तः - प्रपिष्टभागपदेन देवस्वादिव्यवहारप्रमाणकं प्रपिष्टपूष्णोः सम्बन्धमात्रं प्रतीयते। तच्च यागं विनानुपपन्नमिति यागमनुमापयति। अनुमीयमाने यागे अनुमापकपूषसंबन्धेन प्रसिद्ध-पूषदेवत्ययागत्वोपस्थितिः। विशेषणमात्रविधिसंभवे विशिष्टविध्यादि-कल्पनस्यान्याय्यत्वात् नापूर्वयागान्तरानुमितिः। यागविशेषानुमि-तेस्तात्पर्यग्राहकत्वात् पूषादं विजातीयापूर्वसाधनीभूतपूषदेवतापरम्।

ब्राह्मणवाक्यस्य तद्विरोधे तु "पौष्णं [1] पेषणं विकृतौ प्रतीयेताचोदनात् प्रकृतौ" *(3-3-34)* इति *(3.3-18)* सूत्रोदाहरणं द्रष्टव्यम्। तत्र हि दर्शपूर्णमासप्रकरणाम्नानस्य पूषदेवताकयागापूर्वार्थितया पेषणविधायकस्य "पूषा प्रतिष्टभाग:" इति वाक्यस्य प्रकरणे पूषदैवत्ययागाभावेनानन्वयात् वाक्यबलेन प्रकरणात् पौष्णचरावुत्कर्षो दर्शितः॥ स्थानप्रकरणविरोधे इदमुदाहरणम्-राजसूये बहवः पश्विष्टिसोमयागाः समप्रधानतया समाम्नाताः। तत्राभिषेचनीयस्य सोमयागस्य सन्निधौ विदेवनादयः केचन पदार्थाः श्रूयन्ते। ते किमभिषेचनीयस्याङ्गं, उत सर्वस्य राजसूयस्य, इति संशये सन्निधिविशेषात् अभिषेचनीयमात्राङ्गत्वे प्राप्ते, प्रकरणाविशेषात् सर्वराजसूयाङ्गतेति सिद्धान्तः॥ सर्वस्य राजसूयस्य राजसूयात्मना इतिकर्तव्यताकाङ्क्षालक्षणं प्रकरणमस्त्यविशिष्टम्॥ यदि सर्वेषामाकाङ्क्षायामविशिष्टायामपि पाठतः सन्निधिविशेषादभिषेचनीयस्य विशेष-

---

तदुद्देशेन स्वजन्ययागप्रदेयचरुप्रकृतित्वसंबन्धेन प्रपिष्टद्रव्यकत्वं प्रपिष्टभागसमासार्थो विधीयते। अभ्युदितेष्टौ द्रव्योद्देशेन देवताविधिवत् देवतोद्देशेन द्रव्यविधिः निरुक्तसंबन्धेन विशेषणमात्रविधिफलकः संभवति॥ प्रकृतिद्रव्यस्यातिदेशेन संभवत्प्राप्तिकत्वेऽपि ततः पूर्वं विधानाङ्गीकारात् लोहितोष्णीषन्यायेन विधानात् नैकप्रसरताभङ्गदोषः॥ पेषणमात्रविधिश्च फलमिति गुणादिप्रमाणाभावान्न कर्मान्तरता। पूषपदेन तद्देवत्यकर्मलक्षणया तदुद्देशेन प्रपिष्टभागपद लक्षित पेषणविधिरिति पक्षस्तु निषादस्थपत्यधिकरणन्यायेन लक्षणापेक्षया कर्मान्तरविधेरेव न्याय्यत्वात् "वषट् कर्तुर्बाक्येऽति प्रसंगापत्तेश्च उपेक्षणीयः तत्र नव्यप्रकारस्तु भक्षस्य प्रत्यक्षविधिनैव प्राप्तत्पत्वात् ततः पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेः असम्भवी॥ अत एवेदमधिकरणं उत्तरविवक्षया स्मारणार्थमिति न॥ प्रकरणयोर्विरोधेमहप्रकरणमवान्तरप्रकरणेन अभिक्रमणं प्रयाजमात्राङ्गम्।

तोऽप्याकाङ्क्षां कल्पयित्वा, तादर्थ्यं कल्प्येत, तदा विप्रकर्षः। क्लृप्ताकाङ्क्षया ततःप्रागेव सर्वार्थताप्रतीतेः। तस्मात् स्थानात् बलीयसा प्रकरणेन सर्वराजसूयाङ्गता इति ॥ इदं पाठसादेश्यस्य प्रकरणविरोधे उदाहरणम्। अनुष्ठानसादेश्यस्य तद्विरोधे तूदाहरणं "दोहयोः १ कालभेदादसंयुक्तं शृतं स्यात्" *(3-6-28)* इत्यधिकरणे *(3-6-8)* द्रष्टव्यम्। तत्र हि चिन्तितम् - "ऐन्द्रं दध्यमावास्यायां ऐन्द्रं पयोऽमावास्याम्" इति [1]ऐन्द्रे दधि[2]पयसोरङ्गभावेनोत्पन्नयोरपि दधि पूर्वेद्युरनुष्ठीयते, पूर्वेद्युरुपक्रान्तं दधि उत्तरेद्युरभिनिर्वर्त्यत इति दध्नो दिनद्वयसाध्यत्वस्वाभाव्यात्, दोहधर्माश्च, शाखाहरणं, गवां प्रस्थापनमित्येवमादयः, पूर्वेद्युरनुष्ठीयन्ते, ततश्च तेनानुष्ठान-

---

१. अग्नीषोमीयपशोः क्रयसन्निधौ विधिदशायामेव क्लृप्तोपकारप्राकृताङ्गैर्निराकाङ्क्षीकृतस्य औपवसथ्येऽहन्युत्कृष्टस्यार्थोपस्थितिमात्रसत्वेन स्थानम् न तु प्रकरणम्। वाक्यसन्निध्यभावेन प्रकरणशङ्कानुपपत्तेः॥ दर्शपूर्णमासयोस्तु प्रकृतित्वादस्त्येव प्रकरणम्॥ तेन स्थानबाधो न्याय्यः। वस्तुतस्तु दधियागस्य स्थानमपि नास्ति। उत्तरेद्युरेवानुष्ठानात्। दध्नस्तु विद्यमानमपि, नानर्थक्यभियाऽपूर्वसाधनत्वलक्षणातात्पर्यग्राहकम्। न च स्मारकविधयैवे दध्नैव यागोपस्थितेः स्थानशङ्का। तादृशोपस्थितेर्नैयत्याभावेन ग्राहकत्वानुपपत्तेः। किञ्च दोहधर्माः परेद्युरेवाम्नाताः, तत्रैव भाव्यापेक्षायां प्रकरणादुभयार्थत्वेनावगम्यमानाः पूर्वेद्युरनुष्ठीयमानदधिसिद्ध्यर्थं, पूर्वेद्युस्तन्त्रेण क्रियमाणा अपि न तन्मात्रार्थाः भवन्ति॥ दोहनादयस्तु सामर्थ्यादेवावर्तन्ते इति विशेष इत्यलम्॥

---

*1* दर्शे

*2* दधिपयसोरप्यङ्गत्वसद्भावेनोत्पन्नयोरपि

सादेश्यात् दध्यर्थत्वे प्राप्ते प्रकरणाविशेषादुभयार्थत्वमिति ॥ [१]स्थानसमाख्या-विरोधे इदमुदाहरणम्। पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे सान्नाय्य-पात्रशुन्धनक्रमे समाम्नातः शुन्धध्वमितिमन्त्रः [1]पुरोडाशपात्राङ्गमुत सान्नाय्यपात्राङ्गमिति चिन्तायां, समाख्यावशात् पुरोडाशपात्राङ्गत्वप्राप्तौ, सिद्धान्तः पौरोडाशिकसमाख्यारूपस्य पदमात्रस्य प्रकृतिप्रत्ययाभिहितयोः पुरोडाशकाण्डयोः संबन्धे [२]प्रमाणाभावात्, समाख्यामुपलभ्य नूनमस्त्यनयोः कश्चित् संबन्ध इति कल्प्यम्। स्थाने तु देशसामान्यलक्षणः संबन्धः क्लृप्तोऽस्तीति, तेन परस्पराकाङ्क्षा, तेनैकवाक्यत्वं, ततः सामर्थ्यं, ततः श्रुतिः, ततो विनियोगश्च शीघ्रं कल्प्यते। तस्मात् समाख्यातः स्थानस्य विनियोगे सन्निकृष्टत्वेन बलवत्वात् सान्नाय्यपात्राङ्गं शुन्धनमन्त्रः इति[३] ॥ एवमन्यत्रापि बलाबलविषये उदाहरणमूहनीयम् ॥

श्रुत्यादिभिर्विरोधे [2]लिङ्गादीनामव्यवहितानां दौर्बल्ये स्थिते, व्यवहितानां

---

१. क्रमयोर्विरोधे सन्निधानेन याज्याद्वयस्य काम्यैन्द्राग्न-द्वयाङ्गत्वे अनियमेन प्रसक्ते यथाक्रमं पाठात् आद्यस्याद्याङ्गत्वम्, द्वितीयस्य द्वितीयैन्द्राग्नयागाङ्गत्वमिति नियमः ॥ ३. ननु महाधिकारेण सन्निधिबाधात्, शुन्धनमन्त्रस्य पुरोडाशाङ्गतापि स्यादिति चेन्न, तस्यापि वाचनिकाङ्गसन्दष्टत्वेन बलवत्वात्। न चैवं तस्य प्रकरणत्वा-पत्तिः, मन्त्रस्य सिद्धरूपत्वेन, लिङ्गविनियोज्यत्वेन च, प्रकरणा-विषयत्वात्। सन्निधानस्यापि समाख्यावदपूर्वसाधनत्वलक्षणातात्पर्य-ग्राहकत्व एव बलाबलं, न तु विनियोगे। तत्र तूदाहरणान्तरं मृग्यम् इत्यादि नव्यमतमन्यत्रानुसन्धेयम् ॥ २. "पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः। पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् ॥" इति कारिकात्रानुसन्धेया ॥ एवं समाख्ययोः विरोधे आध्वर्यवमिति

---

1 मन्त्रः किं? पुरोडाशपात्राङ्गं

2 बलाबलविषये लिङ्गादीनामव्यवहितानाम्

वाक्यादीनां दौर्बल्यं अनुक्तसिद्धमिति [1] ध्येयम् ॥ स्थितं च तत्र तत्राधिकरणे - तथाहि - **श्रुतिविरोधे वाक्यदौर्बल्यं** उद्भिदधिकरणे दर्शितम् । "उद्भिदा यजेत" इत्यत्र उद्भिदेत्यत्र प्रकृते (तौ) ज्योतिष्टोमे योगलभ्यखनित्रादिगुणविधिरिति प्राप्ते, समानपदश्रुत्युपात्तयागविधिसम्भवे वाक्यगम्यगुणविधिस्वीकारो न युक्त इत्युद्भिदेत्यस्य [2] यागनामधेयत्वं समर्थितम् ॥ **श्रुतिविरोधे१प्रकरणदौर्बल्यं "अहीनो वा प्रकरणात् गौणः"** *(3-3-18)* इति द्वादशोपसत्ताधिकरणे *(3-3-13)* दर्शितम् ॥ तत्र हि ज्योतिष्टोमप्रकरणे "तिस्र एव साह्नस्योपसदः" इत्यह्ना समाम्यमानत्वात् साह्नशब्द-

---

**सामान्यसमाख्यायाः, याजमानमिति विशेषसमाख्यया बाधः । तेनानुमन्त्रणमन्त्राः अध्वर्युकाण्डपठिता अपि यजमानप्रयोज्याः सिद्ध्यन्ति ॥ एतत्सर्वमेकस्य शेषस्य शेष्यनेकत्वे उदाहरणम् ॥ एवं एकत्र शेषिणि शेषानेकप्राप्तौ बलाबलविषये उदाहरणानि मीमांसाकौस्तुभे स्फुटानि द्रष्टव्यानि ॥**

**१. न हीयते=न त्यज्यते, इत्यहीनः, कर्मणि निष्ठा, ओहाक्त्यागे इत्यस्माद्धातोः, ओदितश्च इति निष्ठानत्वम् । घुमास्थागापेत्यादिना ईत्वं च बोध्यम् ॥ सर्वे ह्यन्ये क्रतवः सोमद्रव्यकाः, विकृतित्वादेनमपेक्षमाणाः न जहति ॥ "अव्यक्तासु तु सोमस्य" इति न्यायात् ॥ भाष्यकृता अत्र वाक्येन प्रकरणबाधः शङ्कितः । शास्त्रदीपिकादौ प्राचीनग्रन्थे षष्ठ्याः भाक्तश्रुतित्वमादाय श्रुतिप्रकरणविरोधस्येदमुदाहरणतया दत्तम् ॥ अत्र भाष्यकृतः सिद्धान्तः एवं=नायं नञ्समासः, तथात्वे "तस्य तत्पुरुषत्वात् "तत्पुरुषे तुल्यार्थ" इत्यादिना प्रकृतिस्वरेणाद्युदात्तत्वापत्तेः । दृश्यते तु मध्योदात्तम्पदम् । अतः "अह्नः खः क्रतौ" इत्यनेन "तस्य समूह" इत्यधिकारपतितेन खप्रत्यये "आयनेयी" इत्यादिना, तस्य ईनादेशे, प्रत्ययस्वरेण मध्योदात्तत्वमीकारनिष्ठं घटते**

---

1 इतिध्येयं नास्ति

2 विधेययागनामधेयत्वं

प्राच्यस्य ज्योतिष्टोमस्य त्र्युपसत्त्वमङ्गं विधाय, "द्वादशाहीनस्य" इत्यहीनस्य विधीयमानं द्वादशोपसत्त्वमपि तस्यैव भवितुं युक्तम्, प्रकरणात्। न हीयत इत्यहीनशब्दस्यापि तत्रैव वृत्तिसम्भवात् इति प्राप्ते, द्विरात्रादिष्वहर्गणेषु अहीनशब्दस्य रूढत्वात् अहीनश्रुत्या[2] प्रबलया, द्विरात्रादिष्वेव प्रकरणादुत्कर्षः इति ॥ श्रुतिविरोधे स्थानदौर्बल्यं **"रशना च लिङ्गदर्शनात्"** *(3-6-31)* इत्यधिकरणे *(3-6-10)* दर्शितम्। ज्योतिष्टोमे अग्नीषोमीये पशौ यूपपरिव्याणं विहितम्। "परिव्ययत्यूर्ग्वै रशना" इति। सवनीये पशौ पुनः परिव्याणान्तरं विहितम् 'आश्विनं ग्रहं गृहीत्वा, उपनिष्क्रम्य, यूपं परि[1]व्ययति" इति। परिव्याणसाधनभूता रशना तद्धर्माश्च, अग्नीषोमीयस्थाने विहिताः "त्रिवृद्भवति, दर्भमयी भवति" इत्यादयः। ते किमग्नीषोमीयपरिव्याणार्थाः, उत सवनीयपरिव्याणार्था: अपि इति संशये, स्थानप्रमाणात् अग्नीषोमीयार्थत्वे प्राप्ते सिद्धान्तः-[2]श्रुत्यैव यूपसंबन्धिपरिव्याणाङ्गत्वमात्रमवगम्यते, सवनीयपरिव्याणमपि

---

इति अहस्समुदायसाध्यक्रतौ रूढमिदं अहीनपदमिति। वार्तिककारस्तु अथापि प्रकरणानुरोधात् अहीनपदं योगेन बहुदिवसकत्वसादृश्येन ज्योतिष्टोमे गौणं भवतु। वस्तुतस्तु अहस्साध्यक्रतुसमूहत्वमेव प्रवृत्तिनिमित्तम्। तच्च अभ्यासत्रमूहात्मके ज्योतिष्टोमेऽप्यस्तीति नोत्कर्षः इति प्राप्ते सिद्धान्तमाह - एवकारः न द्वादशत्वेन विकल्पं सहते। किञ्च साह्नाहीनशब्दयोः वैयर्थ्यम्। प्रकरणादेवोभयोः त्रित्वद्वादशत्वयोः विकल्पसंभवात्॥ शब्दभेदोऽपि न युज्यते। अतः अङ्गानि एके। समाप्यमानत्वात् साह्ने ज्योतिष्टोमे त्रित्वाल्पसंख्यौचिता, अहस्समूहसाध्ये द्विरात्रादौ तु द्वादशत्वरूपा महती संख्यैवोचिता इति स्तुत्यर्थं शब्दभेदः अस्मन्मते उपपद्यते॥ द्वादशाहप्रकरणस्थं वाक्यान्तरं तु शाखान्तरपरतया, सत्रमात्रपरतया वा न विरुध्यते॥ वस्तुतस्तु द्वादशाहप्रकरणस्थवाक्यस्य सत्राहीनोभयसाधारणत्वादेतद्वाक्यवैयर्थ्यभिया, एतद्वाक्य-

---

1 तं परिव्ययति  2 प्रातिपदिक श्रुत्या इत्यर्थः ॥

भवत्येतद्यूपसंबन्धि । तस्माच्छ्रुतिबलात् तदर्थापि रशना तद्धर्मश्चेति ॥

[1]श्रुतिविरोधे समाख्यादौर्बल्यं, "तथा कामोऽर्थसंयोगात्" *(3-8-13)* इत्यधिकरणे *(3-8-5)* दर्शितम् । ज्योतिष्टोमे सदोमाने गुणकामः श्रुतः-"यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात्" इति । स किमाध्वर्यवः, यदि कामयेताध्वर्युरिति, उत याजमानः यदि कामयेत यजमानः इति चिन्तायां, आध्वर्यवकाण्डाम्नातत्वात् अस्य वचनस्य समाख्यवशात्सदोमानवत् गुणकामस्याप्याध्वर्यवत्वे प्राप्ते, "मिनुयात्" इति परस्मैपदश्रुत्या, अध्वर्युव्यापारस्य पारार्थ्यप्रतीतेः, तत्फलस्याध्वर्युगामित्वायोगात्, गुणकामो याजमानः इति ॥

---

तया, प्रकरणाच्च त्रित्वविधेरर्थवाद एवायम् ॥

१. "दध्नेन्द्रियकामस्य जुहुयात्" इत्यत्र षष्ठ्या वैयधिकरण्यप्रतीतेः प्रक्षेपः आध्वर्यवः गुणकामः याजमानः ॥ "मिनुयात्" इत्यत्र सामानाधिकरण्येऽपि ञितः डुमिञ् धातोरुत्तरं परस्मैपदश्रवणात् क्रियाफलस्य परगामित्वप्रतीत्या मानमाध्वर्यवम्, गुणकामः याजमानः ॥ "यो वृष्टिकामः स सोमरेण स्तुवीत"—इत्यादौ परस्मैपदाभावेऽपि आत्मगामिद्योतकात्मनेपदसत्वेऽपि ऋत्विक्कामानुरोधेन यजमानफलसाधनीभूतनित्यगुणबाधानुपपत्तेः, औद्गात्रं स्तोत्रं गुणकामो याजमानः, अतस्तत्र सामानाधिकरण्यमात्मनेपदं च प्रयोजककर्त्रभिप्रायेणैव नेयम् ॥ अत एव यत्र न नित्यगुणबाधः, बाधेऽपि वा साक्षादेव वचनं तत्र गुणकामः अन्यगतोऽपि - यथा - "आत्मने वा यजमानाय वा यं कामं कामयते तमुद्गायेत्" इत्यत्र पृथग्यजमानपदश्रवणात्, वाशब्दश्रवणाच्च "आत्मने" इति पदमुद्गातृपरमिति तत्रौद्गात्रं स्तोत्रं फलं च ॥ अत एवानुषङ्गेण वाक्यभेदेऽप्यदोषः । "तं" इत्यनेनोभयनिष्ठं वैकल्पिकं कामं परामृश्य, उद्गेयत्वविधानाद्वा न वाक्यभेदः ॥ गायतेश्च "गायन्ति यं सामगाः" इत्यादावर्याभिधानेऽपि प्रयोगात्र काम-

लिङ्गविरोधे प्रकरणस्य दौर्बल्यं "सन्दिग्धे तु व्यवायात्" *(3-1-21)* इत्यधिकरणे *(3-1-11)* दर्शितम् ॥ दर्शपूर्णमासयोरग्निसमिन्धनार्थाः ऋचः सामिधेन्याख्या विधाय, तासां "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इत्यादिवचनैः कांश्चिद्गुणान् विधाय, ततो "देवेद्धोमन्विद्धः" इत्यादीन् निविदो नाम मन्त्रानाम्नाय, तदनन्तरं "उपव्ययते देवलक्ष्ममेव तत्कुरुते" इत्युपव्यान् विधाय, पुनरपि "अन्तरानूच्यं सदेवत्वाय" इत्यादिभिः सामिधेनीनामेव गुणाः विहिताः। तत्र पूर्वं पश्चाच्च वाचनिकगुणविधानात्, उद्भूतेन सामिधेनीनामवान्तरप्रकरणेनोपवीतं सामिधेन्यङ्गमिति प्राप्ते, सिद्धान्तितम् असंबन्धिनिवित्पदव्यवधानेन तासामवान्तरप्रकरणस्य विच्छेदात् महाप्रकरणेन दर्शपूर्णमासाङ्गमुपवीतम्। न च निवित्पदानामपि अवान्तरप्रकरणेन

---

रूपार्थस्योद्गेयत्वविघातः ॥ १. ननु लिङ्गादग्निसमिद्धत्वरूपसामिधेनीफलप्रकाशकानामपि अवान्तरप्रकरणात्सामिधेन्यङ्गत्वोपपत्तेर्न विच्छेदकत्वशङ्का। इष्यत एव हि "अगन्म" इति मन्त्रस्य यागजन्यफलप्रकाशकत्वेन यागाङ्गत्वमिति चेन्न। "अन्तरानूच्यं सदेवत्वाय" इत्यादीनां अनुवचनसामान्योद्देशेन धर्मविधानात्, सामिधेनीमात्रोद्देशे प्रमाणाभावात्, वाचनिकाङ्गाभावेन न सामिधेनीप्रकरणानुवृत्तिः ॥ अन्ते "देवा वै सामिधेनीरनूच्य" इत्यादिसंकीर्तनमाधारार्थवादत्वादसाधकम् ॥ अपिच यत्रोत्तरकालं बहूनि वाचनिकाङ्गानि तत्रैकस्य पूषानुमन्त्रणमन्त्रादेः परप्रकरणस्थत्वकल्पना। यत्र विच्छेदकानि बहूनि, उत्तरकालं वाचनिकाङ्गं स्वल्पं तत्र वाचनिकाङ्गस्यैवानारभ्याधीतन्यायेनाङ्गत्वोपपत्तेः न प्रकरणानुवृत्तिकल्पना ॥ काम्यसामिधेनीवाक्येष्वपि प्रकरणानुवृत्त्यभावेन प्रकरणप्राप्ताश्रयाभावात् फलोद्देशेनानुवचनान्तरमेव नित्यानुवचनप्रकृतिकं विधीयते। त्रिरभ्यासादीनां नित्यानुवचनधर्माणामतिदेशेन काम्यानुवचनान्तरे प्राप्तिः। मन्त्रविशिष्टानुवचनस्यैव

सामिधेन्यङ्गत्वात् व्यवधानमसिद्धम्। लिङ्गेन प्रकरणं बाधित्वा, तेषामग्निसमिन्धनार्थत्वावगमात् इति ॥ १ लिङ्गात्स्थानस्य दौर्बल्यं "आनन्तर्यमचोदना" (3-1-24) इत्यधिकरणे (3-1-14) दर्शितम् ॥ ज्योतिष्टोमे "मुष्टीकरोति, वाचं यच्छति" इत्युक्त्वा 'दीक्षितमावेदयति" इति श्रूयते। तत्र मुष्टीकरणं वाग्यमनं च मनःप्रणिधानद्वारा, करिष्यमाणार्थत्वावगतमानन्तर्यात् दीक्षितावेदनमात्राङ्गमिति प्राप्ते, सन्निधानात्प्रबलेन लिङ्गेन करिष्यमाणकर्मार्थं तदिति ॥ लिङ्गात्समाख्यादौर्बल्यं "लिङ्गसमाख्याभ्यां भक्षार्थतानुवाकस्य (3-2-24) इत्यधिकरणे (3-2-9) दर्शितम्। अस्तिभक्षानुवाकः "भक्षेहि माविश दीर्घायुत्वाय" इत्यादिः। तस्य कृत्स्नस्य भक्षानुवाकसमाख्यया सोमभक्षणे विनियोगे प्राप्ते, "अश्विनोस्त्वा बाहुभ्यां सध्यासं" "नृचक्षसं त्वा देव सोम सुचक्षा

---

विधेयत्वात् ऋचामपि गुणत्वादतिदेशे न कापि हानिः ॥ काम्यानुवचनान्तराणां विकृतित्वान्न प्रकरणम्। अतः सामिधेन्यवान्तरप्रकरणाभावात् महाप्रकरणात् दर्शपूर्णमासाङ्गमुपवीतं तत्कर्तृसंस्कारकतया तत्कर्तृभिस्सर्वप्रयोगारम्भे कार्यम् ॥ इदं चोपवीतं वासोऽजिनविन्यासरूपं न तु नवतन्तुकत्रिसूत्रविन्यासरूपम्। तस्य दर्शपूर्णमासयोर्नित्यतया विधानादित्यपि ध्येयम् ॥

१. एवं "हस्तावनेनिक्ते," इति हस्तावनेजनमानन्तर्यात् नोलपराजिस्तरणमात्राङ्गमपि तु स्त्रोत्तरपदार्थाङ्गम् ॥ मुष्टीकरणवाग्यमयोस्तु अङ्गुलिवाग्विसर्गप्राक्कालीनपदार्थमात्राङ्गत्वम् ॥ "पश्य मृगो धावति" इतिवत् आकाङ्क्षाविरहेण यच्छब्दाद्युपबन्धाभावे एकवाक्यता नोपपद्यते ॥ २. ग्रहणावेक्षणसम्यग्जरणादेः अविहितत्वेन तेषामपूर्वप्रयोजकत्वाभावात् भक्षमन्त्रैकवाक्यतया भक्षार्थत्वे प्राप्ते मान्त्रवर्णिकग्रहणादिविधिकल्पनया तत्प्राप्त्युपपत्तेः, सम्यक्जरणस्य कृत्यसाध्यत्वेऽपि तदनुकूलव्यापारस्यैवासनशयनादिकस्यानुष्ठेयस्य विधेयत्वात्तत्र तत्र विभज्य विनियोगः। वमनविरेकनिमित्त-

अवद्येषम्" इत्यादि भागस्य ग्रहणावेक्षणादिप्रकाशनसामर्थ्यरूपाल्लिङ्गात् भक्षणे सोमस्य ग्रहणावेक्षणादौ विभज्य विनियोगः इति ॥ [1]वाक्यात्स्थान-दौर्बल्यं, "तद्वत्सवनान्तरे ग्रहाम्नानम्" *(3-6-30)* इत्यधिकरणे *(3-6-9)* दर्शितम् । ज्योतिष्टोमे प्रातस्सवनसन्निधौ ग्रहधर्माः समाम्नाताः 'उपोप्तेऽन्ये ग्रहास्साद्यन्तेऽनुपोप्ते ध्रुवः" इत्यादयः । ते स्थानात् प्रातस्सवनिकग्रहार्था इति प्राप्ते, ग्रहमात्रोद्देशेन धर्मविधानात्, वाक्येन प्राकरणिकसवनत्रय-वर्तिसकलग्रहार्था इति ॥ [2]वाक्यात्सामख्यायाः दौर्बल्य "तस्योपदेश-समाख्यानेन निर्देशः" *(3-7-41)* इति सूत्रेणाधिकरणे *(3-7-21)* दर्शितम् ॥ हौत्रकाण्डाम्नातस्य कृत्स्नस्य समाख्यया हौतृकर्तृकत्वे प्राप्ते, "मैत्रा वरुणः प्रेष्यति चान्वाह" इति वचनात्, प्रैषान्तानुवचनस्य मैत्रावरुणकर्तृ-कत्वमिति ॥ प्रकरणात्समाख्यायाः दौर्बल्यं "तपश्च [3]फलसिद्धत्वाल्लोकवत्"

---

प्रायश्चित्ताम्नानात् सम्यग्जरणपर्यन्तमेव भक्षणं प्रतिपत्तिरिति तस्य भक्षोपयोगिता ॥ १. पूर्वाधिकरणे प्रकरणस्थानविरोधचिन्तनादत्रापि प्रकरणेन स्थानबाध इत्यपि, वाक्यप्रकरणाभ्यां स्थानबाध इत्यपि वा वक्तुं शक्यम् ॥ २. "प्रतिप्रस्थाता मन्थिनं गृह्णाति" "नेष्टा पत्नी-मुदानयति" इत्यादिवचनरूपोपदेशेन "नेष्ट्रीयम्" इत्यादि विशेष-समाख्यानेन च आध्वर्यवमिति सामान्यसमाख्यायाः बाधः इत्यर्थः ॥ न चैवं तादृशविषये सामान्यसमाख्यायाः निर्विषयत्वापत्तिः, यथा-शक्तिप्रयोगे तेषामशक्तौ सविषयत्वोपपत्तेः । वस्तुतस्तु सामानाधि-करण्यसंबन्धेन तत्कर्तृप्रापकत्वमेव सामान्यसमाख्यायाः ॥

३. "वपते" इत्यात्मनेपदश्रवणात् वपनं फलिसंस्कारकम् ॥ "स्थाली पचति" इतिवत् छेदनाख्यवपनाधारत्वेन फलिनो यजमानस्य

---

१ व्यवधानमसिद्धं नास्ति

*(3-8-9)* इत्यधिकरणे *(3-8-3)* दर्शितम् ॥ ज्योतिष्टोमे ' द्व्यहं नाश्नीयात्" इत्यादिवाक्यैः, आध्वर्यवकाण्डविहितं कायशोषणरूपं तप समाख्यावशात् अध्वर्युकर्तृकमिति प्राप्ते, तपसो दुःखफलकत्वात्, दुःखस्य च पापक्षयहेतुत्वात्, प्रकरणाच्च क्रतुफलप्रतिबन्धकपापक्षयहेतुत्वावगमात्. यत्र यजमाने फलेन भाव्यं. तत्रैव प्रकरणावगतप्रतिबन्धकनिवर्तकेनापि भाव्यमिति, समाख्याबाधात् याजमानं तप इति ॥ समाख्याया अपि सामान्यविषयायाः विशेषसमाख्यातो दौर्बल्यं 'तस्योपदेशसमाख्यानेन निर्देशः" *(3-7-41)* इति सूत्र एव दर्शितम् ॥ हौत्रमिति सामान्यसमाख्यया ऋग्वेदोक्तस्य कृत्स्नस्य होतृकर्तृकत्वे प्राप्ते तत्र तत्र पोत्रीयं, नेष्ट्रीयं, इत्यादि विशेषसमाख्याबलात् तत्तत्कर्तृकत्वमिति दिक् ॥ एवं श्रुत्यादीनां विरोधे पारदौर्बल्यमौत्सर्गिकं दर्शितम् ॥ एतदपवादोऽपि तत्र तत्र दृश्यते । तद्यथा[1] "अर्थाद्वा कल्पनैक-

---

तत्र कर्तृत्वम् ॥ अत एव क्षुरग्रहणकर्तृत्वं नापितस्यैव ॥ यत्र तु परस्मैपदश्रवणं "प्रवपति देवश्रुः" ' तमभ्यनक्ति" "शेराषकयानक्ति" - इत्यादौ तत्र समाख्यया अध्वर्युकर्तृकत्वमिति *(3-8-2)* सिद्धान्तः ॥ अतः "अश्नाति'—इति परस्मपदप्रयोगात्, अश्धातोः स्वरितेत्वाद्यभावाच्च अशनप्रतिषेधः अनृतवदनप्रतिषेधवदाराादुपकारकः क्रत्वर्थः इति कर्तृसामान्यविषयत्वं, अनुष्ठेयत्वाभावाच्च समाख्यया नियामिकया अध्वर्युमात्रकर्तृकत्वमिति प्राप्ते सिद्धान्तः ॥ "यदानशनस्तदा मेधार्हो भवति" इति वाक्यशेषानुसारेण यजमाननिष्ठफलप्रतिबन्धकाभावसम्पादकमेवानशनम् ॥ अन्यदीयेन दुःखेनान्यदीयं पाप न नश्येत् खलु ॥ "ऋत्विज उपवसन्ति" - इति श्रुतिः ऋत्विगुपवासे आरादुपकारकताव्यधिकरणस्यैव वा प्रतिबन्धकत्वकल्पना अगत्या स्वीक्रियते ॥

१. नव्यास्तु - सामर्थ्यसहकृतावद्यतिपदेन लक्षणया द्रवद्रव्यावद्यवदानस्योद्देश्यात् न श्रुतिलिङ्गयोर्विरोधः इत्यभिप्रयन्ति ॥ एवं "अञ्जलिना सक्तून् जुहोति" "बध्वा अञ्जलिना वरः लाजान् जुहुयात्" इत्यादौ

देशत्वात्" *(1-4-30)* इत्यधिकरणे *(1-4-20)* "स्रुवेणावद्यति स्वधिति-नावद्यति, हस्तेनावद्यति" इति तृतीयाश्रुतीनां अवदानसामान्ये स्रुवादिशेषित्व-बोधिकानां, स्रुवादिसामर्थ्यरूपलिङ्गानुसारेण, द्रवद्रव्य - मांस - पुरोडाशाव-दानविषयतया संकोचः दर्शितः ॥ तत्र श्रुतितो लिङ्गस्य प्राबल्ये अनन्यथा-सिद्धत्वं हेतुः ॥ स्रुवादेर्मांसाद्यवदाने कथमपि विनियोक्तुमशक्यत्वात् ॥ स्वर्ग-कामाधिकरणे *(6-1-1)* 'स्वर्गकामो यजेत" इत्यत्र भावनायाः भाव्याकाङ्क्षायां, समानपदश्रुत्युपात्तयागपरित्यागेन भिन्नपदोपात्तवाक्यप्रमाणकस्वर्गान्वयो दर्शितः ॥ तत्र श्रुतितो वाक्यस्य प्राबल्ये बीजं विधिश्रुतिवशात् पुरुषार्थरूपभाव्या-पेक्षणम् ॥ प्रायश्चित्ताधिकारे "सर्वत्र[1] दोषसामान्यात्" *(6-5-45)*

---

श्रौतस्मार्तवाक्ये न सम्पुटाकारोऽञ्जलिः "अञ्जलिं बध्नाति" इत्यादाविव ॥ अपि तु सामर्थ्यसहकारेण व्याकोचाकार एव गृह्यते ॥ नन्वेवमपि अश्रुतत्वादवैदिकत्वापत्तिः इति चेन्न—"कल्पना एक-देशत्वात्" — तत्कल्पितपदस्यार्थस्य वा आकाङ्क्षायोग्यतामूलकत्वेन वेदैकदेशत्वात् वैदिकत्वोपपत्तेः। अन्यथा विश्वजिन्न्यायेन स्वर्गफल-कल्पनमप्यवैदिकं स्यात्। अश्रुतत्वाविशेषात्॥ "सन्दिग्धेषु वाक्यशेषात्" इति पूर्वसूत्रेऽपि एतत्सूत्रीयं "कल्पनैकदेशत्वात्" इति पदद्वय-मनुषज्यते ॥ अत एव "आज्येनाक्ताः शर्करा उपदधाति" इति तत्कल्पितैकदेश समुदायस्यापि वैदिकत्वमेव इति बोध्यम् ॥

१. "प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात्" *(6-5-45)* इति विशिष्टं सूत्रम् ॥ "प्रकरणे वा शब्दहेतुत्वात्" *(6-5-46)* इति सिद्धान्त-सूत्रम् ॥ अस्ति स्वतन्त्रं नैमित्तिकं कर्म गृहदोहष्ट्यादिकम् ॥ "भिन्ने जुहोति"—इत्येतत्तु फलकल्पनाभिया प्रकरणात् क्रत्वङ्गमिति स्थितिः । एवमेव "स्कन्ने जुहोति"—इत्येतदपि सान्नाय्यक्रत्वङ्गम् ॥ फलन्तु अङ्गत्वात् विकृतावपि सौर्यादौ भेदने प्रायश्चित्तानुष्ठानम् ॥ दर्शपूर्ण-

इत्यधिकरणे *(6-5-15)* दर्शपूर्णमासप्रकरणे हि "भिन्ने जुहोति" इत्यनेन पात्रभेदने निमित्ते श्रुतो होमः, यत्र यत्र भेदः तत्र सर्वत्र स्यात्, निमित्तसप्तमी-श्रुत्यविशेषात् इति प्राप्ते, नैमित्तिकस्यापि फलावश्यंभावात्, अप्रतीत-फलकल्पनातः प्रतीतैकवाक्यतया तत्फलेन फलवत्वाभ्युपगमस्यैव युक्तर-त्वात्, प्रकरणवशेन दर्शपूर्णमासमध्यगते एव पात्रभेदने होमः इति **श्रुतेः प्रकरणानुरोधो** दर्शितः ॥ प्रकरणस्य प्राबल्ये बीजं विध्यानर्थक्य-परिहारायापेक्षितत्वम् ॥ "एका देया, द्वादश देयाः, चतुर्विंशतिर्देया सहस्रं देयम्, अपरिमितं देयम्" इत्याधानदक्षिणाकल्पभेदश्रुतौ अपरिमित-शब्दस्य बहुत्वसामान्ये रूढस्याविशेषेण यत्किंचित्बहुत्वोपस्थापकत्वे प्राप्ते, "अनियमोऽविशेषात्"इत्यधिकरणे *(6-7-11)* "अधिकं वा स्यात् बह्वर्थत्वादि-तरेषां सन्निधानात्" [1]*(6-7-24)* इति सूत्रेण सहस्रसन्निधानात् सहस्राधिक-बहुत्वपरतया संकोचो दर्शितः ॥ तत्र सन्निधानस्य प्राबल्ये अपरिमितश्रुतेः प्रतियोगिसव्यपेक्षार्थकत्वं बीजम् ॥ **श्रुतेः समाख्यानुरोधस्तु** प्रत्यक्षो-

---

मासाविकारेष्वग्निहोत्रादिषु सत्यपि भेदनेऽनुष्ठानं नेति ॥ १. अपरि-मितशब्दस्य परिमाणशून्यमर्थः योगव्युत्पत्त्या । न हि परिमाणशून्यस्य दानं संभवतीति, तेन प्रकृतपरिमाणप्रतिषेध एवायमिति प्राप्ते ज्ञात-परिमाणेऽपि बाहुल्यमात्रेण, लोकेऽपरिमितशब्दप्रयोगात् बाहुल्ये शक्तिः । ततश्चाश्वकर्णादिवत् रूढ्या योगबाधात्, नायं पूर्वपरिमाण-प्रतिषेधः ॥ अपरिमितशब्दस्य नञ्समासत्वेन, तदन्तर्गतस्य, नञः क्रियान्वयव्युत्पत्त्यभावेन निषेधायोगाच्च । प्रकृतपरिमाणानामनेकत्व-बलेनैव व्रीहियवन्यायेन विकल्पप्राप्तेः निषेधस्य वैयर्थ्याच्च । अतः प्रकृतपरिमाणातिरिक्तानियतपरिमाणकदानान्तरविध्यङ्गीकारे च लक्षणाद्यापत्तेः वरं बहुत्वावच्छिन्नद्रव्यकदानान्तरविधिरेवायम् ॥ बहुत्वस्य चापेक्षिकत्वेन पूर्वप्रकृत सहस्रावधिकत्वनिश्चयात् तदपेक्षयाधि-

पदेशाच्चमसिनामव्यक्तः[१] शेषे *(3-5-33)* इत्यधिकरणे *(3-5-10)* सोम-भक्षकारणानां समवाये समुच्चयव्यवस्थापनेन दर्शितः ॥ तथाहि - सोमे त्रीणि भक्षकारणानि । "वषट्कर्तुः प्रथमभक्षः" इति षष्ठी-श्रुत्या वषट्कर्तुः प्राथम्यविशिष्टभक्षणशेषताबोधनात् वषट्कारः एक भक्षकारणम् । "अभिषु-त्याहवनीये हुत्वा, प्रत्यञ्चः परेत्य सदसि भक्षयन्ति" इति क्त्वा श्रुत्या, होमाभिषवसमानकर्तृकभक्षणविधानात् होमाभिषवौ द्वितीयम् । होतृचम-सादिसमाख्या तृतीयम् । एतेषां समवाये समुच्चयो व्यवस्थापितः । तत्रैकैकस्य भक्षणकारणस्य होमपात्रस्थसर्वहुतशेषविषयत्वप्राप्तावपि वाचनि-कयोः समबलत्वादन्योन्यानुरोधेन एकदेशविषयत्वमापादितम् । समाख्यायास्तु स्वतो दुर्बलत्वेऽपि अत्र निरवकाशत्वात्, अत्यन्तबाधायोगाच्च, तदनुरोधेनापि एकदेशविषयत्वमापादितमिति ॥ "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि" इति दर्शपूर्णमासयोराम्नातमन्त्रे सवित्रश्विपूषन्शब्दानां तयोरसमवेतार्थानां, पूषानुमन्त्रणमन्त्रवत्, लिङ्गा-त्तत्तद्देवत्ये कर्मणि विनियोगप्रसक्तावपि "अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्" *(9-1-36)* इति[१] नावमिकाधिकरणे *(9-1-12)* "अग्नये जुष्टं निर्वपामि" इति भागस्याग्निदेवत्यनिर्वापप्रकाशकतया लिङ्गात्तयोरन्वितत्वेन,

---

कमेवापरिमितम् ॥ १. मैत्रावरुणचमसे मैत्रावरुणसमाख्यया मैत्रावरुणः होमाभिषवकर्तृत्वादध्वर्युः, वषट्कर्तृत्वात् होता इति एकस्मिन् पात्रे कर्तृणां त्रयाणां भक्षणम् ॥ एवं एककर्तरि कारणभेदेन, वषट्कार-समाख्यादिना भक्षणस्य पृथगनुष्ठानेन समुच्चयः । अत एव तत्तत् कारण-वैयर्थ्यापत्तेः न तन्त्रेण एककर्तरि भक्षणम् ॥

१. देवस्य त्वादिपदानामसमवेतार्थत्वाद्विकृतौ नोहः, "मुख्य-दृष्टार्थतास्वार्थसमवेतार्थताभिः" इति वार्तिकसिद्धान्तात् । समवेतार्थत्वं

तेषामपि तदेकवाक्यतया निर्वापं प्ररोचयितुं, कथञ्चिन्निर्वापविशेषणीभूतार्थपरत्वेन दर्शपूर्णमासयोरेव निर्वापे विनियोग इत्युपपादनेन, लिङ्गात् वाक्यस्य बलवत्त्वं दर्शितम् ॥ अत्र लिङ्गाद्वाक्यस्य बलवत्त्वे बीजं सामान्यसंबन्धस्य प्रकरणेनैव सिद्धत्वात् विशेषसंबन्धे वाक्यस्य शीघ्रप्रवृत्तिकत्वम् ॥ लिङ्गं हि सवित्रादिशब्दानां, कर्मान्तराणां प्रकरणानाम्नानेन, तत्सामान्यसंबन्धस्यासिद्धत्वात् द्रागेव विशेषसम्बन्धे न प्रभवति ॥

---

चादृष्टाद्वारकसंबन्धेन स्वशक्त्यार्थस्यापूर्वसाधनीभूतसंबन्धित्वम् ॥ अस्ति चेदं देवस्य त्वादिमन्त्रे अग्निनिर्वापपदयोः तादृशयागगतद्रव्यसम्बन्धित्वात् ॥ जपस्तोत्रशस्त्रादिमन्त्रपदानां च स्वशक्यार्थस्यादृष्टद्वारा तादृशयागसंबन्धित्वेऽपि न समवेतार्थत्वम् । एवं देवसवित्रादिपदानामपि न समवेतार्थत्वम् ॥ उत्पत्तिशिष्टदेवतावरोधात् नैषामुपांशुयाज इव मान्त्रवर्णिकदेवताकल्पकत्वम् । देवताश्रवणरहिते उपांशुयाजे देवताकल्पकत्वे गम्यमाननिर्वापैकवाक्यताभङ्गापत्तिः । "त्वा जुष्टं निर्वपामि" इति पदानामनुषङ्गं प्रत्येकमङ्गीकृत्य, मन्त्रचतुष्टयमभ्युपगम्य, निर्वापैकवाक्यताऽविरोधेन, आद्यानां त्रयाणां उपांशुयाजे देवताकल्पकत्वमपि, अनुषङ्गेण वाक्यभेदाङ्गीकारस्यैव दोषत्वान्न समीचीनम् ॥ षष्ठ्यन्तानां प्रसवबाहुहस्तपादैरन्वितानां देवताप्रतिपादकत्वं नैव प्रामाणिकम् ॥ अत एव पृथक् तत्तद्देवताकयागत्रयाकल्पकत्वमपि परास्तम् । तथात्वे यागान्तराणां आग्नेयाङ्गतया विकृतावूहप्रसक्तेश्च ॥ अत एव सवित्रादिपदानां लक्षणया अग्न्यादिपरत्वशङ्कापि न युक्ता । अश्विपदमश्वदानस्याधाने करणाद्दम्पतिपरम्, पूषपदं पोषकयजमानपरं, अध्वर्युबाहुहस्तयोश्च तदीयत्वं परिक्रीतत्वात् । देवः सवितापि लक्षणया यजमानः, तस्य प्रसवे अनुज्ञायाम्, इत्यर्थाङ्गीकारेण निर्वापशेषतोपपादनं, तु अप्रयुक्तलक्षणादोषात्, सत्रे बहुवचनोहापत्तेश्चायुक्तम् ॥ आहार्यारोपेणसमर्थनसंभवात् ॥

"अदितिः पाशान् प्रमुमोक्तु" इत्येकपाशकाग्नीषोमीयपशु-प्रकरणाम्नातस्य मन्त्रस्य, बहुवचनलिङ्गात् बहुपाशकेषु पशुगणेषु उत्कर्षे प्राप्ते, "विप्रतिपत्तौ [1]विकल्पः स्यात्" *(9-3-15)* इति नावमिकाधिकरणे *(9-3-5)* अग्नीषोमीयपशावेव विनियोगप्रदर्शनेन **लिङ्गात्प्रकरणस्य प्राबल्यं** दर्शितम्। तत्र तस्य प्राबल्ये बीजं लिङ्गस्याप्रधानविषयत्वम्॥ प्रकृत्यर्थस्य पाशस्य, विभक्त्यर्थस्य कारकस्य च, प्रकृतौ सद्भावात्, अप्रधानबहुत्वलिङ्ग-मात्रं प्रकृतावनन्वयि, इत्यलं पल्लवितेन॥ एवं सप्रपञ्चं निरूपितमपि श्रुत्यादीनां समवायोदाहरणं, उत्तरोत्तरदौर्बल्यं च, दृढतरतद्व्यवहारसिद्ध्यर्थं संकोचोऽपि विशेषतो निरूप्यते। तत्र पदान्तरसमभिव्याहारानपेक्षान्वयबोधकशब्दत्वमिह श्रुतित्वम् इत्युक्तम्। पदं चात्र सुप्तिङन्तरूपमिति न पदश्रुतावव्याप्तिः। विभक्तिश्रुतिर्यद्यपि "पशुना" इत्यादौ तृतीयान्वयप्रतियोगिविशेष्य(ष)

---

१. नन्वेवं "गुणे त्वन्यायकल्पनैकदेशत्वात्"—इत्येतदधिकरण-सिद्धान्ताङ्गीकारे, अनेकेषामपि पदानामेक व्रीहिपदानुरोधेन व्रीहिप्रयोग एव संकोचवत् एकबहुवचनानुरोधेनोत्कर्षः भवतु। इतरथा एक पूषपदानुरोधेनेतरपदानामुत्कर्षानापत्तेश्च। गुणभूतलिङ्गानुरोधेन प्राति-पदिकादेः मेषीवर्जं संकोचो यथाऽभ्युपगम्यते तथा गुणभूतवच-नानुरोधेन, ज्योतिष्टोममहाप्रकरणस्यानर्थक्यतदङ्गन्यायसहकृतस्य सामान्यसम्बन्धबोधकस्य सत्वात् क्रतुपशुषूत्कर्षो भवतु। एवं च एक-वचनान्तपाशमन्त्रेण विकल्पोऽप्यदृष्टदोषदुष्टो न भवेदिति चेदुच्यते॥ गुणभूतलिङ्गानुरोधेन प्रधानस्य संकोचेऽपि प्रकरणादिबाधप्रसङ्गेन उत्कर्षे प्रमाणाभावः। संकोचे त्ववर्जनीयतया नान्तरीयसन्निधिबाधेऽपि उत्कर्षे नान्तरीयकत्वाभावेन तद्बाधस्यान्याय्यत्वात्॥ पूषादिपदानां गुणत्वाभावात् प्रत्युत तत्पदव्यतिरेकेणेतरपदानां प्रकृतोपयोग्यर्थ-प्रतिपादकत्वाभावाच्च पूषपदानुरोधेन विशिष्टमन्त्रस्योत्कर्षः आश्रितः॥

लाभाय, पदान्तरमपेक्षते, तथापि साध्यसाधनत्वरूपान्वयस्वरूपबोधे सापि पदान्तरानपेक्षैव ।। "कस्यचित्साधनं पशुः" इति बोधस्य पशुनेत्युक्त एव सम्भवात् इति ॥ लिङ्गं चात्र सामर्थ्यम्। तदनयोः समवाये विरोधे च श्रुतिरेव बलवतीति तत एव विनियोगसिद्धिः। तथाहि - "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इति श्रूयते। तत्र गार्हपत्यमिति द्वितीयाश्रुत्या वह्निविशेषः तावत् - ऐन्द्रीकरणकोपस्थानकर्मेत्यवगम्यते । लिङ्गाच्चेन्द्रप्रकाशनसमर्थरूपात्, इन्द्र-प्रधानकोपस्थानकरणमैन्द्रीति ज्ञेयम् । तदनयोर्विरोधे निरपेक्षप्रमाणाभ्यां विकल्पेनोभयत्र विनियोगः इत्येकः पूर्वपक्षः। समुच्चयेनैवेत्यपरः। सामर्थ्य-मन्तरेण श्रुतिरपि न विनियोगक्षमा इत्युपजीव्यत्वात्, लिङ्गमेव बलवदिति, गार्हपत्यपदमिन्द्रलक्षकम्।। अन्यथा हि मन्त्रस्थेन्द्रपदस्याग्नौ लक्षणैव, अन्यथा विरोधात् इति तृतीयःपक्षः ॥ सिद्धान्तस्तु निरपेक्षरूढया गार्हपत्यपदेनाग्नि-विशेषोपस्थितौ, द्वितीयया च तस्य क्रियाजन्यफलभाक्त्वेऽवगते, "का सा क्रिया" इत्यपेक्षायां "उपतिष्ठते" इति श्रुते, केनेत्याकाङ्क्षायां, "ऐन्द्रया" इति श्रुतम्। "का सा नामैन्द्री" इति जिज्ञासायां "कदाचनस्तरीरसि, नेन्द्र सश्चसि

---

किञ्च बहुवचनान्तपाशमन्त्रस्य क्रतुपशुषु उत्कर्षः व्यर्थः । एक-वचनान्तपाशमन्त्रस्यैवातिदेशतः प्राप्तस्य बहुवचनान्तोहेनेष्टसिद्धेः, तत्पाठस्य फलं मन्त्रत्वमात्रसिद्धिरूपं मन्दं स्यात्॥ बहुवचनं "सुपां-सुलुक्" इत्येवं स्वशक्यबहुत्वाश्रयीभूतपाशावयवजन्यपाशरूपावयवि-वृत्तित्वसंबन्धेनैकत्वलक्षणार्थम्॥ एवं च फलमुखत्वात् विषमशिष्टोऽपि विकल्पः न दोषाय। अतएवैतादृश्या लक्षणायाः द्विपाशिकायां विकृताव-संभवात् "धान्यमसि" मन्त्रन्यायेन तत्र एकवचनान्तमन्त्रस्येव बहुवचनान्तमन्त्रस्यापि द्विवचनान्तोहः 9-3-4 अधिकरणे स्थापितः॥

दाशुषे" इति तत्स्वरूपमुक्तम्। तदर्थस्तु - हे इन्द्र, न कदाचन, स्तरीरसि घातकोऽसि, दाशुषे आहुतिं दत्तवते यजमानाय, सश्चसि प्रीयसे चेति तदर्थे च विविच्यमाने, सहस्राक्षत्वमिन्द्रत्वं, तत् वहावनन्वितम् इति स्वकीय-परमैश्वर्यन्तत्रेन्द्रपदेन बोध्यते, "इदि परमैश्वर्ये" इति धात्वर्थानुसारात्, योगार्थेऽपि तस्मिन् स्वतन्त्रोपस्थित्यर्थं रूढिपूर्वकलक्षणा, विधिवाक्यस्थगार्हपत्य-पदे तु न लक्षणा, प्रथमं तद्बीजानुपपत्त्यनवतारात्, तदा तत्प्रतीतलिङ्गाना-कलनात्, मन्त्रस्थेन्द्रपदार्थान्वयस्यानुपजीव्यत्वात्, "न विधौ परश्शब्दार्थः"[1] इति स्वरसाच्च। एवं च लिङ्गं यावत् श्रुतिं परिकल्प्य विनियुङ्क्ते, तावत् पूर्वमेव प्रत्यक्षा श्रुतिः विनियोगमवगमयतीति श्रुत्या विनियुक्तस्य मन्त्रस्य, नान्यत्र विनियोगाकाङ्क्षेति, श्रुत्या लिङ्गबाधः॥ अयं चाप्रसबाधः। "ऐन्द्र्या

---

१. चातुर्मास्ये श्रूयते—"शूर्पेण जुहोति, तेन ह्यन्नं क्रियते" इति। अत्र हिशब्दस्य हेतुत्ववाचकस्य श्रवणात् औदुम्बरवाक्ये भाव्य-समर्पकपदाभावात् स्तुतिलक्षणायामपि नात्र स्तुतिलक्षणा। अपि तु होमसाधनत्वे साध्ये अन्नकरणत्वस्य हेतुत्वं विधीयते, हेतुश्च व्याप्ति-मन्तरेणानुपपन्नः "यद्यदन्नकरणं तेन तेन होतव्यम्" इति व्याप्तिवचनं कल्पयति। ततश्च शूर्पादन्यस्यापि दर्वीपिठरादेः होमसाधनत्वप्रतीतेः विधौ शूर्पपदमुपलक्षणम्। अवयुत्यानुवादो वा। यद्वा तच्छब्देन शूर्पस्यैव परामर्शात् तद्गतमेवान्नकरणत्वं हेतुः। तेन च विशिष्यैव व्याप्ति-कल्पनात्, अन्नकरणासमर्थशूर्पव्यावृत्तावपि न विधिस्थं शूर्पपदमन्यथा-नेयम् इति प्राप्ते सिद्धान्तितम् "स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य"-इत्यनेन॥ क्रियते इति लडन्तनिर्देशात् वर्तमानान्नकरणत्वस्य हेतुत्वं वाच्यम्। न च होमकाले अन्नकरणत्वं संभवति। अतो लटः भूत-भविष्यत्कालान्तरलक्षणा "क्रियते" इत्यस्य "कर्तुं शक्यते" इति कृञः शक्तिलक्षकत्वं वा विधौ तवाप्यावश्यको। यद्यपि चेयं प्राशस्त्य-

इन्द्रमुपतिष्ठते" १इति विरुद्धश्रुतिकल्पनायोन्मुखीभवतः लिङ्गस्य, निरपेक्ष-श्रुत्या, कल्पनामूलाकाङ्क्षानि(वर्त)कर्तनेन, प्रापकतापरश्रुतेरेवानुन्मज्जनात् ॥ अयमेव चात्र बाधार्थोऽपि ॥ एवं च प्रतीतौ विनियोगे च श्रुतेः प्राथमिकत्वमेव बलम् ॥ तदुक्तं—"यथा शीघ्रं प्रतीतत्वात् लिङ्गादेर्बाधिका श्रुतिः । तथैव विनियोगेऽपि सैव पूर्वम्प्रतीयते" ॥ इति ॥ यच्चोक्तं लिङ्गबलादिति तत्रोच्यते । "लिङ्गज्ञानं पुरोधाय न श्रुतेर्विनियोक्तृता । श्रुतिज्ञानं पुरोधाय, लिङ्गन्तु विनियोजकं" इति । न हि सामर्थ्यम्मन्त्रस्यावगम्य, प्रमाता श्रुतितः, विनियोगमवधारयति । किन्तु श्रुतेर्विनियोगमवगम्य, तदानुगुण्याय, मन्त्रस्य सामर्थ्यं कल्पयति । यथा विस्फोटे जाते वह्निगतदाहशक्तिर्विज्ञायते । तथा च श्रुतेः विनियोगात् पूर्वं सामर्थ्यमस्ति, न तु ज्ञायते । तस्माद्विद्यमानैव श्रुति-

---

लक्षणोपयोगिगुणघटकतया ममाप्यावश्यकी, तथाप्यनुवादस्थत्वात्, प्राशस्त्योपपादकत्वाच्च न दोषः । वर्तमाननिर्देशं विना प्राशस्त्याप्रतीतेः । किञ्चापेक्षितःप्राशस्त्यपरत्वे संभवति नानपेक्षितहेतुपरत्वाङ्गीकारो युक्तः । दर्वीपिठरादेः साधकतमत्वविरहेण तृतीयोक्ततदर्थाभावात् हेतुविधिफलालाभाच्च । यद्यपि शूर्पस्य साधकतमत्वं स्थाल्यादेरिव नास्ति, तथापि लाङ्गलाद्यपेक्षया विद्यमानं तदादाय स्तुतिरुपपद्यते । हेतुविधिपक्षे तु प्रमाणान्तरसिद्धार्थानुवादकत्वविरहात् यथाश्रुतादोषदृष्यन्यथात्वकल्पनं दोष एव ॥

१. ननु ऐन्द्र्यधिकरणपूर्वपक्षस्योत्थितिरेव नास्ति । यतः उपान्मन्त्रकरणे" इति व्याकरणस्मृत्या "उपतिष्ठते" इत्यस्य समीपस्थित्यर्थकत्वं न स्वीकर्तुं शक्यते । मन्त्रकरणकाभिधानार्थकत्वमेव धातोरात्मनेपदरूपोपग्रहवशात् स्वीकर्तव्यम् । एवं च अभिधानकर्मत्वस्य "गार्हपत्यम्" इति द्वितीययाभिधानात् गौणे एवार्थे मन्त्रस्य स्मृत्या विनियोगः

विनियोजिका। तन्निर्वाहार्थं सामर्थ्यं कल्पनीयम्॥ तच्च न मुख्यया वृत्त्या, जघन्यया गौण्यापि ज्ञेयम्। शक्यते चेन्द्रपदेन गौण्या गार्हपत्याभिधानं कर्तुम्। भवति हि गुणादप्यभिधानम्। यथा "सिंहो माणवकः" इति। गुणश्चात्र यज्ञसाधनत्वं स्वकीयपरमैश्वर्यादि॥ यद्यपि वाक्येनाप्यत्र श्रुतेर्विरोध एव, पदद्वयसमभि॰ व्याहारात्मकैकवाक्यताग्रहणादेव हि गार्हपत्योपस्थानकरणमैन्द्रीत्यवगन्तव्यम्। अन्यथा "ऐन्द्रया, इन्द्रं, गार्हपत्यमास्रज्य(साद्य)," इति पदद्वयाध्याहारेणापि श्रुतिलिङ्गयोरविरोधोपपत्तौ नान्यतरबाधमादाय अधिकरणापेक्षा। तथापि श्रुतिबाध्यलिङ्गबाध्यत्वेनैव वाक्यस्य श्रुतिबाध्यत्वोपपत्तौ किमत्र तदुदाहरणमादत्यम्। श्रुतिवाक्यविरोधोदाहरणस्य लिङ्गासत्व एव सप्रयोजनत्वात्। लिङ्गसत्वे (सामर्थ्यं?) वाक्यस्य तद्विरोधेनैव वाक्यबाधात्। तदानुगुण्येन लिङ्गबाधेनैव वाक्यबाधसिद्धेरिति॥ वाक्यं नाम पदसंहतिः।

---

**सिद्ध इति चेदुच्यते। आत्मनेपदबलेन समीपस्थितेरभिधानप्रयोजनकत्वमात्रमवगम्यते। मन्त्रः स्वसाध्याभिधानाङ्गत्वसंबन्धेन वाच्य एव समीपस्थितौ अन्वेति। नातोऽभिधानलक्षणा। एवं च वाच्ये समीपस्थितौ वाच्यस्य गार्हपत्यस्य कर्मत्वेनान्वयः। आर्थिकेऽभिधाने, इन्द्रस्य कर्मत्वमिति श्रुतिलिङ्गयोरविरोधः। अतः मन्त्रस्य गौणार्थे विनियोगो नास्ति इति पूर्वपक्षः। सिद्धान्तस्तु - अस्ति श्रुतिलिङ्गयोर्विरोधः। यतः "ऐन्द्र्या" इति श्रुत्या तद्धितोपात्तमन्त्रस्य प्रकृत्यर्थमिन्द्रं प्रति अङ्गत्वविधाने एकप्रसरताभङ्गापत्तिः। विशेष्यतया प्रतीयमानस्य मन्त्रस्य विशेषणतया प्रतीयमानप्रकृत्यर्थमिन्द्रं प्रति कथमङ्गत्वबोधकत्वं? किञ्च इन्द्रस्य चयनेऽनुपयोगात् उद्देश्यत्वानुपपत्तिः। प्रकरणादुत्कर्षः कल्पनीयः॥ अतः उपक्रमस्थापि तद्धित श्रुतिः जघन्यामपि द्वितीयाश्रुतिं बाधितुं न क्षमते॥ नापि समीपस्थितिं प्रति अग्नेः कर्मत्वम्। तथात्वे तस्याः अभिधानं प्रत्यङ्गत्वे उद्देश्याने-**

ततश्च लिङ्गं बलवत्। तथाहि - "स्योनं ते सदनं कृणोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमानः" इति दर्शपूर्णमासप्रकरणे श्रूयते। तस्यार्थः - हे पुरोडाश। ते=तव, स्योनं=समीचीनं, सदनं=आश्रयं, कृणोमि=कल्पयामि, कीदृशम्? घृतस्य धारया, सुशेवं=सुखसेव्यम्, घृताप्लुतानां कपालानां सुखसेवायोग्यत्वात्, भो व्रीहीणाम्मेध=सारभूत, सुमनस्यमानः=समाहितमनाः सन्, अमृते= अनपायिनि, तस्मिन् स्थाने, सीद=उपविश, प्रतितिष्ठ=स्थिरो भव इति ॥ अत्रेदं वाक्यमेकमनेकं वेति सन्देहः, तत्र स्थानकरणे इदं वाक्यं विनियोज्यम्, तथा च "अनेन स्थानं कुर्यात्" इति श्रुतिः कल्पनीया। स्थापने वा विनियोज्यं, तथा चानेन स्थापनं कुर्यादिति श्रुतिः कल्पनीया। एकमेव कृत्स्नं वाक्यं, समभिव्याहारावगतैकवाक्यत्वे बाधकाभावात्, एवं च कृत्स्न एवायं मन्त्रः, विकल्पेन, समुच्चयेन (वा) स्थाने स्थापने च विनियोज्यः इति पूर्वः पक्षः ॥ सिद्धान्तस्तु भवेदेवं यदि लिङ्गमप्रतीत्य, एकवाक्यत्वं शक्यग्रहं, कथंचित्, गृहीतं वा स्थानकरणादौ विनियोगक्षमम्, नत्वेवम्, प्रतीयमानसामर्थ्यानि [1]विभज्यमानसाकाङ्क्षाणि एकार्थावच्छिन्नानि पदानि हि वाक्यम् मन्त्रेषु च दृष्टार्थेषु प्रकाश्यमानार्थ एव प्रधानम्। प्रकृते सदनस्य कपालस्य

---

त्वकृतवाक्यभेदापत्तेः। अतः आत्मनेपदानुरोधेन धातोः स्वशक्यार्थविशिष्टाभिधानलक्षणावश्यंभावात् विशेष्यभूताभिधान एव मन्त्रस्य करणत्वं, गार्हपत्यस्य चयनसंस्कार्यस्य कर्मत्वमिति ध्येयम् ॥

१. "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्"—इति जैमिनीयं एकवाक्यत्वलक्षणपरं सूत्रम् *(2-1-46)*। अर्थैकत्वं नाम

करणम्, तत्र पुरोडाशासादनं च प्रधानतया द्वयमेव प्राप्तम्। तत्र सदनकरणम्प्रकाशयितुं कल्पयामीत्यन्तो मन्त्रः समर्थः पुरोडाशासादनं च प्रकाशयितुं "तस्मिन्" इत्यादिः समर्थः। तथा च यदा तत्पूर्वोत्तरार्धयोः परस्परान्वयेन समस्तमेकं वाक्यमिति सदनकरणार्थमासादनार्थं वा इत्यवगन्तव्यम्, तत्रोत्तरार्धस्य सदनकरणे, पूर्वार्धस्य चासादने शक्तिं परिकल्प्य कृत्स्नमन्त्रः विनियोक्तुं शक्यते। ततश्च लिङ्गकल्पनव्यवधानेन श्रुतिं प्रति वाक्यं विप्रकृष्टम्।

---

भिन्नप्रतीतिविषयनानामुख्यविशेष्यराहित्यम्। यजुष्ट्वं, यावत्सु पदेषु वाक्यत्वं पर्याप्तं, तावत्सु पर्याप्तम्। न तु वाक्यसमूहे। तस्य विनियोगानर्हत्वात्॥ एवं च अर्थैकत्वे सति विभज्यमानपदसाकाङ्क्षत्वं एकवाक्यत्वम्॥ अन्यस्य दुर्वचत्वात्। "स्योनं ते सदनम्"—इति मन्त्रे, तस्मिन् इत्युत्तरार्धगततच्छब्दस्य सर्वनाम्नः, कस्मिन् इत्याकाङ्क्षायां पूर्वार्धापेक्षणात्, तद्विभागे सापेक्षत्वात् भिन्नवाक्ये तस्मिन् एकवाक्यत्वलक्षणस्यातिव्याप्तिः। अतस्सत्यन्तमुपात्तम्॥ तथा सति, सदनकरण, सादनभावनारूपनानामुख्यविशेष्यवति तत्र नातिव्याप्तिः॥ एवमपि "आमनमस्या—जुहोति"—इत्येकवाक्ये भावनात्रयवति अव्याप्तिपरिहाराय, भिन्नप्रतीतिविषयेति विशेष्यविशेषणं दत्तं। एवं चेत् भावानानामनेकासामपि एकप्रतीतिविषयत्वेन, विशेषणाभावप्रयुक्तविशिष्टाभावान्नाव्याप्तिः॥ व्रीहियववाक्यभेदे "भगो वां विभजतु" इत्यादौ च नानामुख्यविशेष्यराहित्यात् अतिव्याप्तिस्तद्वारणार्थमपि विशेष्यदलम्। विभज्यमानपदसाकाङ्क्षत्वाभावान्नातिव्याप्तिः॥ प्रत्युदाहरणसूत्रं "समेषु वाक्यभेदः स्यात्" *(2-1-47)* इति। अत एवान्योन्यनिराकाङ्क्षेषु "इषे त्वा छिनद्मि" "ऊर्जे त्वोन्माज्मि"—इत्यादौ नैकयजुष्ट्वम्॥ नापि तत्र विनियोगानुसारेण अर्थैकत्वमिति प्रत्युदाहरणम्॥ "आयुर्यज्ञेन"-इत्यादावपि "क्लृप्तीर्यजमानं वाचयति" इति बहुवचनादर्थभेद एव॥

प्रत्यक्षं तु सदने आसादने च लिङ्गद्वयम् सन्निकृष्टम्। वाक्यं यावदेकत्र लिङ्गं कल्पयेत्, तावदपरत्र विद्यमानं लिङ्गं श्रुतिं कल्पयेत्। यावच्चैकत्र कल्पितं लिङ्गं श्रुतिं कल्पयेत्, तावदन्यत्र श्रुतिः विनियोजयेत्। ततश्च विनियोगे जाते, कल्पितापि श्रुतिः नैराकाङ्क्षयात् न विनियोगमावहति ॥ निदर्शनमत्रनिःश्रेण्यारोहणम्, प्राप्यप्राप्तमात्रोपपादि च ॥ "एकमेव फलम्प्राप्तुमुभावारोहतो यदा। एकसोपानवर्त्येकः, भूमिष्ठस्त्वपरः, तयोः ॥ उभयोश्च जवस्तुल्यः, प्रतिलम्भश्च नान्तरा। विरोधिनोः सदैको हि तत्फलं प्राप्नुयात्तयोः ॥ प्रथमेन गृहीतेऽस्मिन्, पश्चिमो विचरेन्मुधा ॥" इति ॥ तथा च लिङ्गकल्पितश्रुत्या एकैकभागस्य विनियोगे सति दर्शपूर्णमासप्रकरण-पाठोपपत्तौ न वाक्यकल्पितलिङ्गकल्पितश्रुतिर्विनियोजिका इति प्रथमोत्पन्नापि एकवाक्यताधीः आभासीभवतीति लिङ्गेन वाक्यबाधः ॥ तथा च लिङ्गेनै-कवाक्यत्वबाधात्, पूर्वार्धं सदने, अपरार्धं सादने विनियुज्यते इति ॥ प्रकरणं च वाक्ययोः परस्पराकाङ्क्षारूपम्। ततो वाक्यं बलवत् ॥ तथा हि-दर्शपूर्णमासप्रकरणे "सूक्तवाकेन प्रस्तरं प्रहरती"ति कुशमुष्टिप्रहरणाङ्गत्वेन[1] सूक्तवाकं विधाय, 'अग्निरिदं हविरजुषत, अवीवृधत, महोज्यायोऽकृत,

---

१. इदं वाक्यं तृतीये द्वितीयपादीयपंचमाधिकरणे चिन्तितम् ॥ इष्टदेवताप्रकाशनेन कृतार्थस्य सूक्तवाकस्य, उपयुक्तसंस्कारत्वेन कृभार्थस्य प्रस्तरप्रहरणस्य च "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" - इत्यत्रेव कालार्था संयोगः, तृतीयाचेत्थंभूतलक्षणे। न तु सूक्तवाकस्य प्रहरणाङ्गत्वेन, येन मान्त्रवर्णिकदेवताकल्पनया, तस्य यागविधायकत्व स्यादिति प्राप्ते सिद्धान्तः – लाक्षणिकत्वपरिहाराय, प्रचुरप्रयोगाल्ला-घवाच्चाभ्युपगतशक्यार्थकरणत्वमेवात्र तृतीयायाः अर्थः, तेन मन्त्रः प्रहरणाङ्गं सन्, आधारोपांशुयाजादिमन्त्रवत् देवताकल्पकः। तेन याग एव प्रहरतिलक्षितो विधीयते। अत एव "सूक्तवाक एव याज्या,

प्रजापतिरिदं हविरजुषत, अवीवृधत, महोज्यायोऽकृत, अग्नीषोमाविदं हविरजुषेताम्, अवीवृधेतां, महो ज्यायोऽक्राताम्, इन्द्राग्नी+क्रातां, इन्द्र इदं हविरजुषत, अवीवृधत, महो ज्यायोऽकृत, देवाः आज्यपाः आज्यं जुषन्त, अवीवृधन्त, महोज्यायोऽक्रत" इति सूक्तवाकनिगद आम्नातः। तत्र यागकालीनतत्तन्मन्त्रयुक्तां देवतां, सूक्तं यथा भवति, एवं वदतीति, सूक्तवाकपदार्थः। [1]देवतासम्बोधनात्मकपरप्रत्यायनार्थानि यजूंषि निगदाः॥ दर्शेष्टौ आग्नेयोऽष्टाकपालः, विष्णुरुपांशु यष्टव्यः, इन्द्राग्नी द्वादशकपालेम, इति विशेष-

---

प्रस्तरोहविः" इत्यर्थवादस्यापि यागसाधनत्वेन गौणयाज्यात्वप्रतिपादकस्योपपत्तिः॥ इदं चस्विष्टकृदादिवत् आश्रयिकर्म। तेन द्वितीयावगतप्रतिपत्तित्वमपि न विरुध्यते॥ प्रक्षेपांशेन प्रस्तरस्य, उद्देशांशेनोपयुक्तदेवतायाश्च दृष्टरूपस्संस्कारः॥ स्विष्टकृद्यागोऽपि हि प्रक्षेपांशेनोपयुक्तहविस्संस्कारकः, "अयाडग्निः, अग्नेः प्रियाधामानि" इत्यादिमन्त्रांशेन इष्टेज्यमानदेवतासंस्कारकः इति आश्रयिकर्म॥ प्रस्तरमिति द्वितीया तु प्रतिपत्तिसंस्कार्यत्वानुवादपरैव॥ प्रयोजनं पूर्वपक्षे सूक्तवाकपाठकाले प्रहरणम्, सिद्धान्ते तु "मन्त्रान्तैः कर्मादीन् सन्निपातयेत्" इति न्यायेन अन्ते इत्याद्यूह्यम्॥ "सहशाखया प्रस्तरं प्रहरति" इत्यत्रापि यागानुवादेन शाखाविधानात् प्रस्तरहोमः शाखायाः प्रयोजक इति पौर्णमास्यामपि शाखा संपादनीया इति प्राप्ते सूक्तवाकमन्त्रकरणकत्वेन तद्वाक्ये प्रहरतिना होमलक्षणायामपि शाखासाहित्यवाक्ये प्रहरतिः प्रमाणाभावात् न होमलक्षकः। अपि तु प्रहरण एव शक्यार्थे शाखासाहित्यम्॥ एवं च प्रस्तरस्य हविरासादने उपयुक्तस्यैव, दोहे उपयुक्तायाः शाखाया एव प्रहरणं प्रतिपत्तिः। अतः सहयोगतृतीयायाः करणत्ववाचकत्वाभावात् प्रस्तरप्रहरणकालविशिष्टप्रहरणान्तरस्यैव शाखोद्देशेनात्र विवक्षितगत्या विधानम्। न तु प्रस्तरप्रहरणव्यक्तेरेव शाखोद्देशेन विनियोगः। तथात्वे यथा शक्तिप्रयोगादौ प्रस्तराभावेऽपि

देवताः ॥ पौर्णमासेष्टौ आग्नेयोऽष्टाकपालः, अग्नीषोमावुपांशु यष्टव्यौ, अग्नीषोमावेकादशकपालेन, इति विशेषदेवताः। एवं च सूक्तवाके देवतावाचकमग्नीषोमादिपदं यथादेवतालिङ्गानुसारेण विभज्य प्रयोक्तव्यमिति [1]तृतीये सिद्धान्तितम्। तत्र सन्देहः - किमग्नीषोमादिपदैकवाक्यतापन्नम्" इदं

---

शाखाप्रहरणानापत्तेः। अतश्च प्रतिपत्तित्वात् प्रहरणमपि न शाखायाः प्रयोजकम्, तेन पौर्णमास्यां न शाखोत्पादनम् ॥ अस्तु तर्हि प्रस्तरप्रहरणव्यक्तावेव शाखायाः गुणत्वं न तु समप्रधानत्वेन प्रस्तरप्रहरणस्येव शाखाप्रहरणस्यापि शाखाप्रतिपत्तितया, किन्तु शाखासाहित्यं, गुणत्वेन, मैत्रावरुणग्रह इव पयस्साहित्यं, प्रस्तरप्रहरणे, "सहयुक्तेऽप्रधाने" इत्यनुशासनेन गुणत्वावगमात् इति चेन्न, शाब्दबोधे गुणत्वश्रवणेऽपि प्रयाजशेषाभिघारणन्यायेनार्थिकप्रतिपत्त्यन्तरविधिकल्पनेन प्रस्तरवच्छाखायाः अपि कृतार्थत्वाविशेषेण प्रतिपाद्यत्वम्, अत एव शाब्दबोधे गुणत्वश्रवणमपि प्रस्तरप्रहरणकाले प्रतिपत्त्यर्थं, न तु स्वयं तन्त्रम्, अतश्चासन्नयतश्शाखां विनैव प्रस्तरप्रहरणम्। पौर्णमास्यां च यथा शक्तिप्रयोगे प्रस्तराभावेऽपि "गुणलोपे च" इति न्यायेन शाखाप्रहरणम् ॥

१. एतच्च *(2-1-14)* अधिकरणे स्पष्टं। निगदेषु परप्रत्यायनरूपकार्यवशेन उपांशुत्वनिवृत्तावपि मन्द्राद्यनेकस्वरप्राप्तौ उच्चैस्त्वनियमः "उच्चैर्निगदेन" — इत्यनेन क्रियते ॥ "नमः प्रवक्त्रे" इत्यादिनिगदाः विशेषविधिनोपांशु पठ्यमानाः अपि वर्तन्ते। अत एव न नितरां गद्यमानत्वं निगदत्वं, अपि तु यजुर्मन्त्रविशेषत्वं ॥

२. "कृत्स्नोपदेशादुभयत्र सर्ववचनम्" *(3-2-16)* इत्यत्रैवं चिन्तितम्। श्रुत्या लिङ्गोपष्टब्धया प्रहरणाङ्गत्वावगमात्, न लिङ्गमात्रेण सूक्तवाकस्य इष्टदेवतास्मरणार्थत्वम्, न चात्राविरोधोऽपि, अध्येतृ-

हविः'' इत्येवमादिकं यत, तदप्यग्नीषोमादिपदैः सहोत्क्रष्टव्यम्। उत देवतावाचकाग्नीषोमादिपदमात्रमिति । तत्र पूर्वः पक्षः - यद्यपि इदं हविरित्येवमादिकं अप्यग्नीषोमादिपदैकवाक्यतया प्रतीयते, तथाप्यग्नीषोमीयमन्त्रगतमपि ''इदं हविः'' इत्येवमाद्यवशिष्टपदजातं अग्नीषोमयोः दर्शदेवतात्वाभावात्, तन्मात्रं परित्यज्य, दर्शे पठनीयम्॥ तद्भागस्य प्रकरणावगततादर्थ्याबाधात्। अन्यथा अमीषाम्मन्त्रभागानां कृत्स्नदर्शपूर्णमासशेषत्वबोधकप्रकरणभङ्गापातात् इति॥ सिद्धान्तस्तु परस्पराकाङ्क्षा-बलात् कस्मिंश्चित् विशिष्टैकार्थे पर्यवसितानि पदानि वाक्यम्। लब्धवाक्यभावानां च कार्यापेक्षाबलात् वाक्यान्तरेण संबन्धः प्रकरणम्। यथा अङ्गप्रधानवाक्ययोः। समिदादियागभावना हि पुरुषाभिलषितं भाव्यमपेक्षमाणा, दर्शपूर्णमासभावनामेव तथा निर्धारयति न चामीषां सन्निहितकरणोपकारे संभवति विश्वाजिन्न्यायेन फलकल्पनम्, गौरवात्॥ नापि दर्शजन्यस्वर्गानुषङ्गः, तस्य प्रकरणनिराकाङ्क्षत्वात्, परस्पराकाङ्क्षा हि प्रयोजिका। तदाकाङ्क्षायाश्चोभनिपतितानि समिदादिवाक्यानि स्वकार्यापेक्षाणि तदपेक्षितोपकारलक्षणं कार्यमासाद्य निर्वृण्वन्ति। निर्धारयन्ति च स्वकृतोपकारेण दर्शपूर्णमासादिभावनामिति॥ तथा च वाक्ययोः परस्पराकाङ्क्षारूपं प्रकरणमेकवाक्यतया जनितं स्ववाक्यार्थावगतिनिबन्धनमित्युपजीव्यप्रथमावगतपदैकवाक्यताग्रहेण बलवता बाध्यते। तथा चाग्नीषोमादिपदैकवाक्यतापन्नं ''इदं हविः'' इत्यादि कथं

---

प्रसिद्ध्या समस्तानुवाके सूक्तवाकशब्दस्य रूढत्वेनावयवशो विभज्य, विनियोगे, अवयवलक्षणापत्त्या श्रुतिविरोधापत्तेः। नचासौ सुष्टु वक्तीति' व्युत्पत्त्या इष्टदेवतावाचिपदसमुदाये यौगिकः। पारायणाध्ययनादौ कतिपयपदप्रयोगेणापि सूक्तवाकपदार्थसम्पत्तिप्रसंगेन समस्तानुवाके रूढेरवश्यम्भावात्। अस्तु चेष्टदेवताप्रकाशनमानुषङ्गिकं फलम्, प्रहरणमेव तु श्रुतिविनियोगात् सर्वानुवाकप्रयोजकम्, इति दर्शे

तत्परित्यागेन दर्शाङ्गतां यायादिति ॥ किञ्च प्रकरणं विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य विनियोजकम्। तथा चाग्नीषोमीयमन्त्रशेषस्य "इदं हविरजुषेताम्" इति भागस्य ऐन्द्रादिमन्त्रान्वयाश्रवणात्, प्रकरणेन, तदन्वयरूपं वाक्यं प्रकल्प्य, तेन दर्शविशिष्टेन्द्रादिप्रकाशनसामर्थ्यं लिङ्गं कल्पनीयम्। तेन च विनियोजिका श्रुतिः कल्पनीया, इति त्रिभिस्तत्र व्यवधानम्। वाक्यन्तत् क्लृप्तमेव, लिङ्गं परिकल्प्य, विनियोजिकां श्रुतिं कल्पयतीति द्वाभ्यामेव व्यवधानम्। तेनार्थविप्रकर्षाद्वाक्यस्य प्रकरणात् बलवत्त्वेन, अग्नीषोममन्त्रस्थेदंहविरित्यादिभागस्य, तच्छेषतया, तत्सहितस्यैवोत्कर्षः। अत एव "पूष्णोऽहं देवयज्या प्रजया च पशुभिर्जनीय" इति दर्शप्रकरणपठितपूषमन्त्रस्य दर्शे पूषदेवताविरहात् अन्वयासंभवे, अग्रे विहितपूषदेवताकर्मणि देवतानुसारात् कृत्स्नस्यै-

---

पौर्णमासे च सर्वःप्रयोक्तव्यः इति प्राप्ते सिद्धान्तः। प्रबलयापि श्रुत्यालिङ्गस्य बाधे प्रहरति लक्ष्यहोमान्तर्गतदेवतोद्देशस्याराादुपकारकत्वापत्तेः, इष्टविषया सन्निपत्योपकारकत्वलाभार्थं, श्रुतिरेव लैङ्गिकेष्टदेवताप्रकाशनार्थत्वं मन्त्रस्यानुमन्यते। अत एव श्रुतिबलीयस्त्वात् प्रहरणप्रयुक्तस्सूक्तवाकः प्रहरणाभावेऽननुष्ठीयमानोऽपि, विभज्य विनियोगांशे इष्टदेवताप्रकाशनरूपलैङ्गिककार्यस्यैव प्रयोजकत्वमनुमन्यते। नचैवं सूक्तवाकशब्दस्यावयवलक्षणार्थत्वापत्तिः, सूक्तवाकपदस्य सुष्ठु उक्तं वक्तीति व्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रविशेषे योगरूढत्वात्। तेन यत्र यावत्यो देवताः इष्टः प्राकृत्यो वैकृत्यो वा तत्र तावानेव सूक्तवाकः। अतश्च सूक्तवाकप्रातिपदिकश्रुत्यनुरोधेनापि लिङ्गाबाधः। न चाध्ययनादौ योगबाधात्, रूढिमात्रकल्पना, तत्र तदानीन्तनवैदिकप्रसिद्ध्यनुरोधेन दार्शपूर्णमासिकदेवतापदसमुदाययुक्त एव मन्त्रे निरूढलक्षणाङ्गीकारात्॥ अश्वकर्णादौ शक्यसम्बन्धप्रतीत्यभावात् क्लृप्तावयवशक्तिबाधेनाप्यतिरिक्तशक्तिकल्पनमिति विशेषः इति॥

बोत्कर्षः। प्रकरणापेक्षया लिङ्गस्य बलवत्त्वेन तत्कल्पितवाक्यस्यापि बलवत्वात्। कर्मसमवेतदेवतादिप्रकाशनद्वारा मन्त्रविनियोगात्। तदसम्भवे मन्त्रविनियोगासम्भवात्। अत एव "द्वादशोपसदोऽहीनस्य" इत्यस्य सोमयागप्रकरणपठितस्यापि न तत्र द्वादशोपसत्संबन्धबोधकत्वम् संभवतीति, प्रकरणान्तरस्थाहीनयागस्य रूढयाहीनपदोपस्थापितस्योपसद्भिः सम्बन्धबोधकत्वं तद्वाक्यस्येति॥ समानदेशे, [1]पाठः अनुष्ठानं वा स्थानम्। तत्राद्यमाग्नेयाग्नीषोमीयमध्यविहितोपांशुयाजे तदुभयमन्त्रमध्यगतस्य दब्धिमन्त्रस्य, विनियोजकम्। द्वितीयमग्नीषोमीयपशौ रशनादीनां विनियोजकम्। तस्मात्प्रकरणं बलवत्। तथाहि—नानेष्टिपशुसोमसङ्घातात्मकराजसूयमध्यगताभिषेचनीयाख्यसोमयागसन्निधौ "अक्षैर्दीव्यति," "शौनश्शेफमाख्यापयति" इति विदेवनादिः श्रूयते। शौनश्शेफं=शुनश्शेफविषयमाख्यानम्॥ तच्च ब्राह्मणे पठितं, यथा शुनःशेफः किल ऋषिपुत्रः हरिश्चन्द्रपुत्रेण पुरुषमेधार्थं

---

इदं वाक्यप्रकरणयोर्विरोधोदाहरणं, श्रुतिलिङ्गविनियुक्तस्य, सिद्धरूपत्वेन प्रकरणाविषयस्य च सूक्तवाकस्य मुख्यप्रकरणविनियोज्यत्वाभावात्, अधिकाराख्यगौणप्रकरणस्यापूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वस्य प्रसक्तत्वात्तद्बाधाभिप्रायेण नेयम्॥ मुख्योदाहरणं वैमृधः, तस्य वाक्यावगतपौर्णमास्यङ्गत्वेन प्रकरणावगतदर्शाङ्गताया बाधात् इति प्रागुक्तमनुसन्धेयम्॥

[1]. इतिकर्तव्यतात्वेनायोग्यसंबन्धयोः वाक्यार्थयोः सन्निधिः स्थानम्। इतिकर्तव्यतात्वेनायोग्यत्वं च द्वेधा। क्वचिदाकाङ्क्षाविरहात्, विकृतेरुपहोमादिविषये, क्लृप्तोपकारप्राकृताङ्गैरेव निराकाङ्क्षत्वात्, क्वचिदव्यापारात्मकत्वात् यथा जपादिमन्त्रादौ, अत्र चैकवाक्योपात्तव्रीहियागादिसन्निधेरपि तथात्वापत्तेः वाक्यार्थेत्युक्तम्। प्रयाजादीनां स्थानविषयत्वापत्तिनिरासार्थमाद्यं विशेषणम्॥

पशुत्वेन क्रीतः, स च वरुणाय स्वस्यालम्भे कर्तुमारब्धे, वरुणं तुष्टाव, स चैनं तुष्ट एव ररक्ष इति। तत्र देवनादयः किं स्थानात् अभिषेचनीयमात्रशेषाः, उत प्रकरणात् राजसूयस्येति सन्देहः। तत्र पूर्वः पक्षः—यद्यप्यभिषेचनीयस्य नावान्तरप्रकरणं संभवति, तस्य विकृतित्वेन प्राकृतैरेवाङ्गैराकाङ्क्षापूरणे, अङ्गापेक्षाविरहात्। "विकृतयो हि क्लृप्तोपकाराकाङ्क्षाः प्रथमं प्राकृतैरेवाङ्गैः समीपस्थमङ्गं विहाय संबद्ध्यन्ते" इति गृहमेधीयाधिकरणे भाष्यकारोक्तेः। तथापि अभिषेचनीयसमीपे, श्रुतविदेवनादिकं स्थानाख्यप्रमाणेन, तदाकाङ्क्षामुत्थाप्य, तत्रैव विनियुज्यते इति। सिद्धान्तश्च तदाकाङ्क्षारूपावान्तरप्रकरणं परिकल्प्य तद्द्वारा वाक्यलिङ्गश्रुतिकल्पनायां, विनियोगः, तदपेक्षया क्लृप्तेन [1]महाप्रकरणेन राजसूयाङ्गतैव देवनादीनाम् प्रथममवगतेति प्रकरणेन स्थानबाधः इति॥ समाख्या यौगिकी संज्ञा।

---

१. नचाभिषेचनीयस्यापि फलवत्त्वेन प्रकरणाशङ्का, तस्य विकृतित्वेन क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षस्य, तदभावात्। न च विकृतावपि यत्प्राकृताङ्गानुवादेन वैकृतमङ्गं वाचनिकं विधीयते, यथा पृषत्त्वादि, तस्यापि विकृतिगताङ्गाकाङ्क्षायामनिवृत्तायामेव विधेयत्वात्, तत्सन्दष्टस्य तत्पूर्वभावित्वे सति प्रधानोत्तरभाविनः अपूर्वाङ्गस्य वा, प्रकरणेनैव ग्रहणोपपत्तेः, विदेवनादीनां च अभिषेचनीयोत्तरं उक्तविधाभिषेकपूर्वभावित्वेन पाठात्, प्रकरणग्रहणोपपत्तिरिति वाच्यम्। प्राकृताङ्गानुवादेन विहितस्यापि अपूर्वाङ्गस्योपहोमवत् विकृत्याकाङ्क्षायां निवृत्तायामेव विधानात्। यस्य हि प्राकृतकार्यापन्नतया वैकृताङ्गस्य विधानं, यथौदुम्बरत्वशरादेः, तस्यैवानिवृत्ताकाङ्क्षायां विधानम्। तत्सन्दष्टस्यैव च तत्पूर्वभाविनो वा, प्रधानोत्तराङ्गस्य, विकृतिप्रकरणेन ग्रहणम्॥ अभिषेकस्य तु प्राकृतकार्यापन्नत्वाभावात्, पृषत्त्वावत्, न तत्पूर्वपठितानां विदेवनादीनां अभिषेचनीयप्रकरणग्राह्यत्वोपपत्तिः। वस्तुतस्तु - अभिषेकस्यापि स्वतन्त्रो-

ततः स्थानं बलवत् । तथाहि - याज्ञिकैः पुरोडाशार्थमन्त्रबाहुल्यात् "पौराडाशिक" इति समाख्याते काण्डे आग्नेयादीनां क्रमेण मन्त्राः समाम्नाताः । तत्रामावास्यकसान्नाय्यपात्रस्थाने "शुन्धध्वं दैव्याय कर्मणे" इति मन्त्रः, समाम्नातः । स किं पौराडाशिकसमाख्यया, तत्काण्डोक्तपुरोडाशपात्रोलूखलमुसलादि शोधनेऽप्यङ्गम्, उत स्थानात् सान्नाय्य-पात्र शोधने इति सन्देहः । तत्र पूर्वः पक्षः - पुरोडाशसम्बन्धात् पौरोडाशिकः

---

त्पन्नस्य, प्रकरणात् राजसूयाङ्गत्वावगतेः, "माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते" इत्यत्र प्रतिशब्दयोगेन कालार्थ एव संयोगः, नत्वङ्गाङ्गिभावार्थः । अतः अभिषेकः माहेन्द्रस्तोत्रकालेऽपकृष्टः, पूर्वपठितान् देवनादीनपि तदा बद्धक्रमत्वेनापकर्षतीति वेदिकरणन्यायापवादकेन "अन्ते तु बादरायणः" इति न्यायापवादकेन च पाञ्चमिकद्वितीयपादीयदशमाधिकरणन्यायेन स्थापितम् ॥ अतो त्रिदेवनाद्यभिषेकान्तानां सर्वेषामेव सन्निधानादभिषेचनीयाङ्गत्वप्रसक्तौ प्रकरणेन तद्बाधः ॥ न च राजसूयस्यापि प्रत्येकं विकृतित्वात् प्रकरणाभावः, पवित्रादारभ्य क्षत्रस्य धृतिं यावत् राजसूयत्वधर्मपुरस्कारेण, वाचनिकाङ्गाम्नानात्, तत्सन्दष्टविदेवनादीनां, प्रकरणग्राह्यत्वोपपत्तेरित्यलं विस्तरेण ॥

१. "कर्मैके तत्र दर्शनात्" इत्यादिना सूत्राष्टादशकेन वर्णनित्यत्वेन शब्दनित्यत्वे, आकृत्यधिकरणेन अर्थनित्यत्वे, औत्पत्तिकाधिकरणे तयोः संबन्धनित्यत्वे, वेदांश्चैकाधिकरणेन रचनायाः अपौरुषेयत्वे च स्थापितेऽपि वाक्यवाक्यार्थसम्बन्धस्य शक्तिरूपत्वे तात्पर्यरूपत्वे वा पुरुषसंबन्धस्यापेक्षणात् भ्रमप्रमादादिसंभवान्न विधिवाक्यानामैकान्तिकं प्रामाण्यं, अनन्तवाक्यार्थसाधारणपदानां वाक्यार्थविशेषे सम्बन्धग्रहोऽपि न संभवति इति "उत्पत्तौ वाऽवचनाः स्युः" *(1-1-24)* इति सूत्रेणाशङ्क्य "तद्भूतानां क्रियार्थेन समाम्नायः अर्थस्य तन्निमित्तत्वात्" *(1-1-25)* इति सूत्रेण सिद्धान्तितम् ॥

इति तदर्थसमाख्यया श्रुत्या वाक्येन वा पुरोडाशपात्रमात्रप्रतिपादनात्, तदपेक्षया स्थानेन, प्रकरणाद्यनुमानपरम्परया; सान्नाय्यपात्रमात्र(संबन्ध) प्रतिपादनस्य, विलम्बितत्वात्, समाख्ययैव विनियोगः इति ॥ सिद्धान्तस्तु - समाख्ययापि संबन्धमात्रं बोध्यते। तदपि वाक्यार्थविधया, न तु शेषशेषिभावः, पुरोडाशसम्बन्धिकाण्डोक्तसर्वपात्रसंबन्धोऽपि न शाब्दः। ततस्तादृशसमाख्यानुपपत्त्या, तत्सान्निध्यं प्रकल्प्यते, तेन प्रकरणं, तेन वाक्यं, तेन लिङ्गं, तेन श्रुतिः। तया च तादर्थ्यमित्यर्थविप्रकर्षः समाख्यायाः, प्रत्यक्षेण तु सान्नाय्यपात्रसन्निधिना प्रकरणादिकल्पने सन्निकर्षः इति स्थानेन समाख्याबाधः इति दिक् ॥ चतुर्थे शेषशेषिभावं प्राप्तानां कर्मणामनुष्ठानशक्तिरूपा प्रयुक्तिर्निरूपिता। शेष्येव शेषं प्रयुङ्क्ते, स्वसिद्ध्यर्थमनुष्ठापयति, न तु अनुनिष्पाद्यपि, नापि शेषः शेषिणं प्रयुङ्क्ते ॥ अनेक-

---

पदैरभिहिता एव पदार्थाः स्वबोध्यसंबन्धरूपया लक्षणया, तात्पर्यभूतां भावनां, समभिव्याहारविशेषबलात् विशिष्य बोधयन्ति ॥ तद्भूतानां= तेषु पदार्थेषु, भूतानां= विद्यमानानां पदानां, क्रियार्थेन = क्रियावाचकेन-पदेन सह, समाम्नायः =सम्यक्, परस्परान्वितस्वार्थबोधकत्वेन, उच्चारणं भवति। अर्थस्य =वाक्यार्थप्रतीतेः, तन्निमित्तत्वात्= पदार्थप्रतिपत्तिनिमित्तकत्वात् ॥ तथा च "यजेत स्वर्गकामः" इत्यादौ, स्वर्गकामनिष्ठा स्वर्गभाव्यिका, यागकरणिका, भावना प्रवर्तनाविषयः इत्यादिरीत्या, भावनाविशेष्यकबोधस्य सर्वविधिष्वैकरूप्येण, न तदानन्त्यप्रयुक्तसम्बन्धाग्रहः। तात्पर्यं च शब्दगत एव धर्मविशेषः। तदाह कश्चाध्ययनविधिरिति न पुरुषसंबन्धप्रयुक्तं विधीनामप्रामाण्यम् ॥ पदैरभिहिताः पदार्था एव समभिव्याहारवशात् वाक्यार्थं प्रतिपादयन्ति ॥ अभिहितानामन्वयः इति भाट्टाः। अन्वितेऽभिधानमिति प्राभाकराः ॥ एतच्चान्यत्र स्फुटम् ॥ लोके, सन्निशमात्= सतः = वर्तमानात्, "प्रसिद्धपदसमवधानमप्रसिद्धपदार्थमपूर्वमपि

शेषिसद्भावेऽपि यत्रान्यप्रयुक्तस्यैवान्यत्र विनियोगः, तत्र, यत्प्रयुक्तस्यान्यत्र विनियोगः, स एव शेषं प्रयुङ्क्ते, न तु शेष्यपि सन्नन्योऽपि ॥

एवं च "तप्ते पयसि दध्यानयति" इत्यादिवाक्ये विधीयमानस्य दध्यानयनस्य [1] द्विकर्मकस्य कर्मान्तराकाङ्क्षायां, समभिव्याहृतं पयः, कर्मान्तरत्वेनान्वीयमानं, सप्तम्या अधिकरणत्वेन निर्देशात्, प्रधानकर्मतया पर्यवस्यतीति, प्रकृतप्रधानभूतपयःपरामर्शिना तत्पदेन सामानाधिकरण्येन निर्दिष्टतया, [2]पयोरूपत्वेनामिक्षैव शेषित्वात् स्वशेषभूतं दध्यानयमनुष्ठापयति। न तु तदनुनिष्पादि वाजिनमपीति, आमिक्षापचारे एव, पयोऽन्तरे दध्यानयनस्य प्रयुक्तिः, न वाजिनापचारे ॥ "कृष्णविषाणया कण्डूयते, चात्वाले

---

बोधयति" इति नियमात्, वेदेऽपि, प्रयोगसन्निकर्षः=अप्रसिद्धस्वर्गहेतुभावनाबोधिपदघटितस्य "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादेर्वाक्यस्य प्रयोगात्, आधुनिकानामपि, सन्निकर्षः=अर्थावबोधसंबन्धः, स्यात्=भवेदेवेत्यदोषः ॥

१. "अकथितञ्च" इति सूत्रेण गौणकर्मसंज्ञया, षोडशधातवः द्विकर्मकाः अनुशिष्टाः॥ "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक्स्यादकथितं तथास्यान्नीहृकृष्वहाम् ॥" इति कारिका ॥ "गां पयो दोग्धि, बलिं याचते वसुधाम्"—इत्यादि चोदाहृतम् ॥ तेन "णीञ्" प्रापणे इत्ययं धातुः द्विकर्मकः इत्यर्थः ॥ अत्र दधिकरणकानयनेन तप्तं पयः संस्कुर्यात् इति वाक्यार्थात् सप्तम्याः अधिकरणत्वविवक्षयाऽऽगतायाः, कर्मत्वमेवार्थः ॥

२. आमिक्षा पयोरूपा इति, तच्छब्देन, पूर्ववाक्यनिर्दिष्टप्रधानपयःपरामर्शिना, आमिक्षापदसामानाधिकरण्यात् प्रतीयते। अत एवामिक्षायागः पयोयागविकार इत्युक्तमष्टमे ॥ किञ्च, मधुररसभूयस्त्वात्, दध्यभावेऽपि चाम्लान्तरेणामिक्षासंपत्तेरन्वयव्यतिरेकाभ्यां, "जुषन्तां युज्यं पयः" - इति मन्त्रवर्णाच्च, पयस एवावस्थाविशेषापन्नस्यामिक्षा-

कृष्णविषाणां प्रास्यति इति कृष्णविषाणायाः। कण्डूयनप्रासनरूप-क्रियान्वये सत्यपि, “कृष्णाविषाणया” इति तृतीयया कण्डूयनं प्रति शेषः, प्रासनं प्रति तु द्वितीयया शेषिणीति, निर्वृत्तकण्डूयनप्रयोजनाकाङ्क्षायाः तस्याः प्रासनात्पूर्वमपचारे प्रासनार्थं न पुनः कृष्णविषाणान्तरोपादानप्रयुक्तिः॥ “पुरोडाशकपालेन तुषानुपवपति” इत्यत्र ३पुरोडाशप्रयुक्तस्यैव कपालस्य, तुषोपवापं प्रत्यपि शेषत्वेन विनियोगात्, यत्र पुरोडाशो नास्ति, न तत्र तुषोपवापार्थं कपालप्रयुक्तिः। इत्येवं सापवादा प्रयुक्तिः तत्र चतुर्थाध्याये प्रपञ्चिता॥ तादृशस्य चतुर्थाध्यायस्य प्रथमपादे प्रधानभूतामिक्षा दध्यानयनस्य प्रयोजिकेत्यादिप्रधानप्रयोक्तृत्वं निरूपितम्॥ द्वितीये तु अप्रधानं

---

पद्वाच्यत्वं स्वीकर्तव्यम्। पयस उद्देश्यत्वेऽपि, तापं विना नामिक्षेति, अर्थात् उद्देश्यविशेषणस्याविवक्षितस्यापि तापस्य लाभः। यदि तु तापं विनाप्यामिक्षा लोके संभाव्यते तदा, न सप्तम्या प्रधानलक्षणा, अपि तु तप्तपयोऽधिकरणत्वविशिष्टदध्यानयनस्यैव, अवस्थाविशेषविशिष्टपयोरूपामिक्षोद्देशेन विधानमुद्देश्यवाचकपदकल्पनया अंगीकर्तव्यम्॥ तस्यैव तच्छब्देन परामर्शात् सुतरां लिङ्गोपपत्तिः॥ अधिकरणत्वस्यैव दध्यानयनं प्रत्यङ्गत्वेऽपि, पयसो नाङ्गत्वम्, क्लृप्तप्रयोजनत्वात्॥ तेन पयस्येव प्रातर्दोहधर्माः, दधि तु लौकिकमेव संस्कारकः॥

३. ननु प्रकृतिविकारभावाभावेन तादर्थ्यसमासायोगात्, षष्ठीतत्पुरुषसमासे च सम्बन्धमात्रावगतेः, पुरोडाशसंबन्धिकपालस्य विनियोगेऽपि तत्फलं तद्भिन्नकपालव्यावृत्तिरेव स्यात्। एवं चाप्रयोजकत्वफलालाभात्, संबन्धरूपाङ्गाभावेऽपि अग्निहोत्रहवणीन्यायेन, प्रधानभूतकपालबाधानुपपत्तेः, चर्वादावपि कपालः सम्पादनीयः तुषोपवापाय, न तु हस्तेन सः इति चेन्न, पुरोडाशसंबन्धस्य विधेयकोटिप्रविष्टस्य प्रमाणान्तरागम्यस्यालोचने, तत्प्रयुक्तत्वस्याप्यवगतेः, न पुनस्तुषोपविधिरपि तत्प्रयुक्तः॥ गौरवात्। अतो लाघवादवघातकालीन-

वत्सापाकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वं वर्णितम्। तृतीये जुहूपर्णत्वादेः अपापश्लोकफलमयीभावाभावचिन्ता कृता। चतुर्थे राजसूयगत-जघन्याङ्गाक्षद्यूतादिचिन्ता, इति विषयविवेको द्रष्टव्यः॥

एकप्रयोगान्तर्गतानामङ्गप्रधानानामनुष्ठानक्रमः पञ्चमाध्याये निरूपितः। तत्र "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादि श्रुत्या, गृहपत्यादीनां नेत्रन्तानां, सत्रयजमानानां दीक्षाक्रमः, "अग्निहोत्रं जुहोति, यवागूं पचति" इत्यत्र होमद्रव्यनिष्पत्त्यर्थं यवागूपाकप्रयोजनरूपेणार्थेन, पाकहोमयोः क्रमः। "समिधो यजति" इत्यादिविधिविहितानां [1]प्रयाजादीनां विधिवाक्यपाठक्रमेणैव क्रमः। वाजपेये प्राजापत्यानां पशूनां, प्रतिपश्वावर्तनीयेषु [2]उपाकरणनियोजनादिषु, उपाकरणे यतः कुतश्चित्, पशोरारभ्य, यत्र कुत्रचिद्

---

स्तुषोपवापः परप्रयुक्तकपालोपजीवितया, न कपालोपादानासादनयोः प्रयोजकः। भिनयनकालीनस्तु कपालधारणस्य प्रयोजको भवत्येव। उपादानस्य तु सोऽप्यप्रयोजकः॥ अतः प्रयोजनं चर्वादौ न कपालनियमः। अग्निहोत्रहवणीशब्दस्तु भाविव्युत्पत्त्या, योग्यतासत्वेन वा केवलपात्रे गौणः इति पवमानेष्टिकालेऽपि तेन पात्रेणैव निर्वापः इति वैषम्यमित्यलं पल्लवितेन॥

१. प्रयाजोदाहरणं पाठक्रमस्य मन्त्राभावं कृत्वाचिन्तया। यतः मन्त्राणामेव प्रयोगकालीनार्थस्मारकतया, ब्राह्मणवाक्यानामर्थ-विधानेनैव कृतार्थानामनुष्ठानकाले पुनः स्मारणव्यापाराभावात्। प्रयाजानां चेतरेषामिव याज्यापुरोनुवाक्यरूपस्मारकमन्त्रसद्भावात्॥ अतः येषां मन्त्राम्नानं नास्ति ते उदाहर्तव्याः। तेषां, मन्त्राभावेन, विधायकत्वेनोपयुक्तस्यापि ब्राह्मणवाक्यस्यैवोपस्थितस्य स्मारकत्वस्या-गत्या अभ्युपगमादिति॥

२. यत्रानेकेषां प्रधानानामङ्गानां च एकेन प्रयोगविधिनोप-संहारात् साङ्गानां साहित्यावगमः, तत्र दर्शपूर्णप्राजापत्यादौ, स्मार्ते च

पशौ समापिते, तेनैव प्रवृत्तिक्रमेण नियोजनादिक्रमः । साद्यस्के क्रतौ "सह पशूनालभते" इति श्रुत्या, सवनीयस्थान[3] एवाग्नीषोमीयसवनीयानुबन्ध्यपशुत्रयस्यापि सहकर्तव्यतया प्राप्तौ सवनीयस्थानेन प्रथमं सवनीयपशोरुपाकरणम्, अनन्तरमग्नीषोमीयानुबन्ध्ययोरिति क्रमः । दर्शे पुरोडाशसान्नाय्ययोर्मुख्यक्रमेण प्रयाजशेषाभिघारणक्रमः इत्येवं श्रुत्यादिभिः क्रमः सापवादो निरूपितः ॥ एवं क्रमनिरूपणार्थं प्रवृत्तस्य पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थादिभिः क्रमो निरूपितः । द्वितीये वाजपेयगतेषु सप्तदशपशुषु एकैक[4]धर्मसमापनम् इत्यादिक्रमविशेषो वर्णितः । तृतीये पशुप्रयाजादीनामावर्तनेनैकादशत्वमित्यादि[5]वृद्धिर्वर्णिता । अनारभ्यविहितग्रहचित्रिण्योः अनावृत्तिरित्यादिवृद्ध्यभावो वर्णितः । चतुर्थे क्रमनियामकानां श्रुत्यर्थपाठादीनां

---

दैविकपैतृकादिब्राह्मणानेकसहिते श्राद्धादौ, आवर्तनीयानामङ्गानां किं काण्डानुसमयः उत पदार्थानुसमय इति संदेहे पदार्थानुसमय इति विचारितम् ॥ एकैकस्य प्रधानस्य सन्निपत्योपकारकाङ्गकाण्डं कृत्वेतरस्य करणं काण्डानुसमयः । एकैकमङ्गमेकैकस्य कृत्वा इतरस्य करणं पदार्थानुसमयः इति लक्षणमप्यत्र द्रष्टव्यम् ॥

३. स्थानातिक्रमसाम्यात् प्रधानप्रत्यासत्तेश्च सवनीयस्थाने त्रयाणां पशूनां सहानुष्ठानमिति स्थितं तृतीये *(3-8-22)* ।

४. "कारणादभ्यावृत्तिः" — इति अस्यापवादः शतसहस्रसंख्याकपुरोडाशवति अश्वप्रतिग्रहेष्टियागे काण्डानुसमयः, तथा "मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन" इत्यत्र क्रियानेकः पदार्थः इति चिन्तितम् ॥ सत्रे द्वादशाहे काण्डानुसमयः इत्यपि अपवादः ॥

५. "विवृद्धिः कर्मभेदात् पृषदाज्यवत्तस्य तस्योपदिश्येत" — इत्यादिना एकैकस्य समिदादेरावृत्तिर्न, अपि तु प्रयाजानां पंचानामेकादशत्वसंख्यासंपत्त्यर्थं विवृद्धिरिति स्थापितम् ॥ विवृद्धिरपि

प्रबलदुर्बलभाव: विचारित: इति विषयविवेक: द्रष्टव्य: ॥ अथ - "श्रुत्यर्थादि-प्रमाणानां स्वरूपं विषयास्तथा । तेषां प्राबल्यदौर्बल्ये संक्षिप्यैव निरूप्यते ॥" पाञ्चमिके क्रमे श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तय: षट् प्रमाणानि । तत्र श्रुतिप्रमाणक: क्रम: "श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात्" (5-1-1) इति प्रथमाधिकरणे *(5-1-1)* दर्शित: ॥ सत्रद्वादशाहे श्रूयते-"अध्वर्युर्गृहपतिं दीक्षयित्वा, ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारं, ततस्तं प्रतिप्रस्थातारं दीक्षयित्वाऽर्धिनो-दीक्षयति ब्राह्मणाच्छंसिनं ब्रह्मण:, प्रस्तोतारमुद्गातु:, मैत्रावरुणं होतु:, ततस्तं नेष्टा दीक्षयित्वा, तृतीयिनो दीक्षयति, आग्नीध्रं ब्रह्मण:, प्रतिहर्तारमुद्गातु:, अच्छावाकं होतु:, ततस्तामुन्नेता दीक्षयित्वा, पादिनो दीक्षयति, पोतारं ब्रह्मण:, सुब्रह्मण्यमुद्गातु:, ग्रावस्तुतं होतु:, ततस्तमन्यो ब्राह्मण: दीक्षयति, ब्रह्मचारी वाचार्यप्रेषित:" इति । अत्र विधेयान्तर[1]राभावत्, गृहपत्यादीनां दीक्षाक्रम एव

---

**स्वस्थानविवृद्ध्या ह्युपसत्त्वे, न तु दण्डकलितवदावृत्त्या, सा तु "त्रिरनुवाक: पठ्यतां" इत्यादौ इत्यपि निर्णीतम् ॥ "प्रहेष्ट-कमौपा नु वाक्यं सवनचितिशेषत्वात्" *(5-3-15)* इत्यत्र वृद्ध्यभाव: चिन्तित: ॥**

**१. "तत्तत्पदार्थानन्तरं तत्तत्पदार्था: कर्तव्या:" इत्येवमनेक-पदार्थवृत्तिपौर्वापर्यसमुदायरूप-विततिरेव शृङ्खलावत् क्रम: इति मूलानुधाविन:, सचाग्राह्यत्वात्' विकृतौ क्वचिदेकपदार्थलोपे तावत्पदार्थवृत्तिपौर्वापर्यसमुदायस्यासंभवात्, व्युत्क्रमणेनानुष्ठानेऽपि वैगुण्यानापत्ते: असमीचीन: ॥ अत: क्रमो नामाव्यवहितोत्तरत्वरूप-मानन्तर्यम् । तच्चैकप्रतियोगिकमेकवृत्ति । यथा "वेदं कृत्वा वेदिं करोति" इत्यत्र वेदकरणप्रतियोगिकमानन्तर्यं वेदिकरणवृत्ति ॥ अत्र च दर्शपूर्णमासोत्तरत्वस्य सोमवृत्तित्वात् तद्व्यावृत्त्यर्थं अव्यवहि-तेति विशेषणम् ॥ तत्र दर्शपूर्णमासपूर्वकालिकत्वमात्रं क्त्वाप्रत्ययार्थ: ।**

त्वाश्रुत्यर्थपौर्वापर्यलक्षणः विधेयः इति श्रुतिप्रमाणकः क्रमः। अध्वर्यादीनां दीक्षैव विधेया किं न स्यात् इति चेन्न, सत्रे "ये यजमानास्त ऋत्विजः" इति सर्वेषां यजमानत्वादेव दीक्षाप्राप्तेः, इमानध्वर्युर्दीक्षयति, इमान् प्रस्थाता, इत्यादिकर्तृनियमोपिविधेयः स्यादिति चेत्, अत्रोच्यते, अध्वर्योस्तावत् कर्तृत्वं गृहपत्यादिदीक्षायां चोदकादेव प्राप्तम्, अध्वर्युदीक्षायान्तु "चित्पतिस्त्वा पुनातु" इति मन्त्रलिङ्गविरोधात् अध्वर्योः कर्तृत्वं न संभवति इति "इतरमन्यस्तेषां यतो विशेषः स्यात्" (3-8-21) इति न्यायेन द्वितीयस्याध्वर्युपुरुषस्य प्रतिप्रस्थातुः कर्तृत्वं, प्राप्नोति, द्वितीयानां ब्राह्मणाच्छंस्यादीनां दीक्षायामपि "न

---

नत्वव्यवहितत्वांशोऽपि। न च सोमविधेस्तदपेक्षा, येनाव्यवधान एव वेदकरणवाक्ये इव तत्पर्यवस्येत्। सोमविधेः भिन्नप्रयोगविधिविधेय-दर्शपूर्णमासप्रतियोगिकक्रमानपेक्षत्वात्। वेदिकरणवेदकरणयोः एकप्रयोगविधेयत्वेन तदपेक्षासत्त्वाच्च वैषम्यात्॥ अतस्तत्रोत्तरकालत्वमेव विधेयम्, न क्रमः। क्रमश्च सर्वत्रोत्तरपदार्थाङ्गं, तस्यैव "क्वाहं कर्तव्यः" इत्यपेक्षणात्। न तु पूर्वपदार्थाङ्गम् - "मदुत्तरं कः पदार्थः कर्तव्यः" इत्यपेक्षायाः क्वचिदप्यनुदयात्॥ पूर्वपदार्थस्तु प्रतियोगितया क्रमविशेषणं, दर्शपूर्णमासादिरिव पूर्वकालतायाः। एतेनोभयपौर्वापर्य-रूपोऽपि क्रमः पदार्थद्वयाङ्गमिति केषांचित् पक्षोऽपि निरस्तः। प्रमाणाभावात्। अस्तु वा "प्रथमभक्षः" इत्यादौ प्राथम्यं पूर्वपदार्थाङ्गमेव॥ एतानि द्वादशवाक्यानि श्रौतक्रममात्रविधायकानि। अर्थित्वाद्युद्देश्य-तावच्छेदकमङ्गीकृत्य षडेव वा॥ उन्नेतृदीक्षावाक्ये तुवैकल्पिकब्रह्म-चारिविधानात्, हृदयादिन्यायेन, पाठादेव क्रमसिद्धेः, ततः इत्यनुवादः। 'निपातत्वाच्च वा' शब्दस्य ब्रह्मचारिविशेषणत्वेऽपि न व्युत्पत्तिविरोधः॥ अभावपक्षेच ब्राह्मणानामेवार्त्विज्यविधानात् ब्राह्मण इत्यनुवादः। ब्रह्मचारिणश्चाचार्याधिनत्वस्मृतेः, आचार्यप्रोषत इत्यप्युनुवाद एव॥

धूतः पाचयेत्" इति दीक्षितस्य दीक्षाकर्तृत्वप्रतिषेधेन, अध्वर्योः कर्तृत्वा-संभवात्, तेनैव न्यायेन, तस्यैव तत्प्राप्नोति। तृतीयानां च दीक्षायां नेष्टुः, तस्य पादिनां च दीक्षायामुन्नेतुः, च कर्तृत्वं प्राप्नोति। उन्नेतृदीक्षायास्तु अर्थादन्यस्य ब्राह्मणस्य कर्तृत्वं प्राप्नोति। क्षत्रियादीनां याजकत्वस्यान्तिमाधिकरणे २(12-4-14) निराकरणात्। तस्माद्विधेयान्तराभाव क्रम एवात्र विधेयः॥

"अर्थाच्च" (5-1-2) इति तदनन्तराधिकरणे (5-1-2) आर्थक्रमो दर्शितः। "यवाग्वाग्निहोत्रं जुहोति, यवागूपचति" इत्यत्र यवागूपाकहोमयोः सत्व-

---

वस्तुतस्तु आनन्तर्यरूपक्रमपक्षेऽपि तत्तत्संस्कार्यं विशिष्टदीक्षोद्देशेन क्रमविधाने वाक्यभेदापत्तेः, संस्कार्यमात्रोद्देशेन विधौ च दीक्षा-निष्ठत्वालाभात्, उन्नेतृवाक्य एव तदुद्देशेन कर्तृविधिः। इतरस्तु सर्वोऽपि पदसमुदायः औचित्येन एतत्स्तुत्यर्थोऽनुवादः। कर्तुर्दीक्षा-निष्ठत्वलाभस्तु अनुवादबलात् इरापदस्येव नानुपपन्नः। एवं च सर्व-स्याप्येकवाक्यत्वलाभः। क्रमस्त्वनुवाद एव तादृशपाठादवधेयः॥ निषादस्थपत्याधिककरणन्यायेन श्रूयमाणवाक्ये वाक्यभेदाभावेन, पाठगम्यानेकवाक्यकल्पनस्यादोषत्वात्। अन्यथा हृदयादिवाक्येष्वपि विशिष्टविध्यापत्तेः। न च पाठक्रमस्य श्रुतिक्रमस्य च कश्चिदनुष्ठाने विशेषः अतो मूलोक्त श्रुति क्रमोदाहरणमनादरणीयमिति॥ वितति-रूपक्रमापेक्षया सर्वस्याप्येकवाक्यत्वं मूलेऽङ्गीकृतमिति विशेषः॥

२. 12-4-14 अन्तिमाधिकरणे एवं विचारितम्। "प्रभुत्वा-दार्त्विज्यं सर्ववर्णानां स्यात्—इति पूर्वपक्षसूत्रम्। विद्वत्वाविशेषात् त्रयाणामपि वर्णानां तत्। यत्त "षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका"—इत्यनेन ब्राह्मणस्यैव याजनमुक्तं, तत्पुरुषार्थम्। अतश्च क्षत्रियवैश्ययोः प्रत्यवायं सोढ्वापि आर्त्विज्यकरणे न क्रतुवैगुण्यमिति॥ सिद्धान्तस्तु - "यज्ञं व्याख्यास्यामः" इत्युपक्रम्य, "ब्राह्मणाः ऋत्विजः" इति कल्पसूत्रकारैः कात्यायनादिभिरार्त्विज्योद्देशेन ब्राह्मण्य-विधानात्, मन्त्रार्थवादेतिहासादौ तद्गमकसत्वाच्च ब्राह्मणस्यैवार्त्वि-ज्यमिति सिद्धम्॥

दीक्षायामिव क्रमनियमविधानाभावात् अनियमप्राप्तौ, प्रयोजनवशात्, प्रथमं यवागूपाकः, तदनन्तरं होमः इति नियमः होमद्रव्ययवागूत्पत्त्यर्थो हि श्रुत्या लिङ्गेन च पाकः, स पश्चात् क्रियमाणोऽनर्थकः स्यात्, होमोऽप्यसति द्रव्ये न निर्वर्तेत, इति ॥ "क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् *(5-1-4)* इत्यधिकरणे [1]पाठक्रमो दर्शितः ॥ "समिधो यजति" "तनूनपातं यजति" इत्यत्र क्रमेण पठितानां यागानामनुष्ठानक्रमनियामकयोः श्रुत्यर्थयोरभावात्, अनियमे प्राप्ते लोके "स्नायादनुलिम्पेत् भुञ्जीत" इत्यादौ पाठक्रमस्य यथापाठं स्मरणम्, यथास्मरणमनुष्ठानमिति नियामकत्वदर्शनात् स्वाध्याय-विधिविहितपाठक्रमानुसारेण क्रमः इति । "स्थानाच्चोत्पत्तिसंयोगात्"[2] *(5-113)* इत्यधिकरणे *(5-1-6)* स्थानप्रमाणकः क्रमो दर्शितः। साद्यस्के क्रतौ

१. श्रुतिर्नाम वृत्त्या क्रमबोधकः क्त्वान्तशब्दः । अथ, ततः, इत्यादेरानन्तर्यवाचित्वं शक्त्या । क्त्वाप्रत्ययस्य पूर्वकालवाचकस्या-पेक्षानुरोधात् क्रमपरत्वं लक्षणया । उभयसंग्रहाय सामान्येन वृत्त्या शक्तिलक्षणासाधारण्या इत्युक्तम् ॥ अर्थादिषु कल्प्यशब्दस्य वारणाय क्लृप्तेत्युक्तम् ॥ अर्थः प्रयोजनम् । पदार्थबोधकवाक्यपाठक्रमः पदार्थक्रमनियामकः । पदार्थबोधकत्वं, क्वचिदनुष्ठेयपदार्थबोधकत्वं, क्वचिच्च तत्संबन्धिद्रव्यदेवतादिबोधकत्वं । तेन च द्विविधेनाप्यनुष्ठेय-पदार्थक्रमनियमः। क्रमप्रमाणस्य नियामकत्वात्, यत्र न क्रमापेक्षा साम्नाय्यादौ, एकप्रयोगविधिपरिग्रहेऽपि, संप्रतिपन्नदेवताकत्वेन सहानुष्ठानात्, यत्र वा भिन्नप्रयोगविधिपरिग्रहः, यथा तत्तत्काम्य-कर्मणां, तत्र पाठो न नियामकः। तत्र सर्वत्र स्वाध्यायसिद्ध्यर्थ एव पाठः जपपारायणादावुपयुज्यते ॥

२. पाठक्रमस्याव्यवधानेनानुष्ठानात् दैक्षे विद्यमानस्यापि, प्राजापत्ये बहुपशुके बाधात् षोडशक्षणव्यवधानमात्रसह्यताप्रदर्शनार्थं षष्ठः प्रवृत्तिक्रमः सूत्रकारेण चतुर्थः प्रोक्तः संगतिलोभेन। बलाबलन्तु न सूत्रक्रमेण। अपि तु "पाठस्थानमुख्यप्रवृत्ति" इति प्रसिद्धक्रमेण ॥ स्थानं च क्लृप्तक्रमकपूर्वपदार्थोपस्थितिः। सा चैकसंबन्धिदर्शनेना-

"सहपशूनालभते" इत्यग्नीषोमीयसवनीयानूबन्ध्यपशूनां सहालम्भः श्रुतः। तच्च साहित्यं सवनीयस्थाने मध्यगते। अग्नीषोमीयस्थाने सवनीयानुबन्ध्ययोरपकर्षे अनुबन्ध्यस्यात्यन्तविप्रकर्षप्रसङ्गात्, अनुबन्ध्यस्थाने अग्नीषोमसवनीययोरुत्कर्षे अग्नीषोमीयस्यातिविप्रकर्षप्रसंगाच्च। एवं स्थिते सवनीयस्थान एव प्रतिपशूपाकरणादयः भेदेनापतन्तः, प्रकृतिवदग्नीषोमीयस्य प्रथमं कार्याःइति प्राप्ते, सवनीयस्थानात्सवनीयस्य प्रथमं कार्याः। "आश्विनं ग्रहं गृहीत्वा" त्रिवृता यूपं परिवीय, आग्नेयं सवनीयं पशुमुपाकरोति" इति श्रवणात्, आश्विनग्रहणेन पूर्वपदार्थेन सवनीयधर्माणां उपस्थापनात, आग्नीषोमीयधर्माणां सहालम्भनवचनेन स्वस्थानाच्च लितानामिह तथोपस्थापकाभावात इति॥ ३"मुख्यक्रमेण वाङ्गानां तदर्थ-

---

परसंबन्धिस्मरणमिति न्यायेनोत्तरपदार्थस्य झडित्युपस्थापिका। अतस्तत्साहित्येन विहितानामन्येषां पदार्थानां तदनन्तरानुष्ठानसिद्धिः॥ स्थानावगतस्य क्रमस्य कल्पितवाक्येन विनियोगेऽवगते, प्रयोगविधिना प्रयोगविधानम्॥

३. मुख्यत्वं च प्रधानत्वम्। मुखमिव मुख्यम इति व्युत्पत्तेः। न तु मुखे=उपक्रमे भवं मुख्यम् इत्यर्थः अन्यत्रेवेहाश्रीयते॥ सरस्वती च सरस्वांश्च सरस्वन्तौ विरूपैकशेषः। सरस्वन्तौ देवते ययोस्तौ सारस्वतौ इति विग्रहः। वाक्यशेषस्य तात्पर्यग्राहकस्य सत्वात्॥ न चेवमपि एकैकस्य द्विदेवत्यत्वं भवतु इति चेन्न, एकैकदेवत्ययाज्यानुवाक्यापाठेनैकैकदेवत्यत्वावगतेः। अत एव प्राजापत्यवत्संप्रतिपन्न देवताकत्वाभावेन मन्त्रपाठक्रमात् प्रधानक्रमे सति, मुख्यक्रमेणैव तन्निर्वापयोः क्रमः॥ वस्तुतस्तु तुल्यन्यायतया पूर्वपदार्थप्रवृत्तिरिवोत्तरपदार्थप्रवृत्तेरपि पूर्वपदार्थनियामकत्वस्य न्याय्यत्वात, प्रकृते च याज्यानुवाक्यारूपोत्तरपदार्थप्रवृत्त्यैव निर्वापक्रमोपपत्ते, नेदं मुख्यक्रमस्यासंकीर्णमुदाहरणम्। अतः दध्नः पूर्वं शाखाहरणादयः धर्माः

त्वात्" (5-1-14) इत्यधिकरणे (5-1-7) मुख्यक्रमेण क्रमो, दर्शितः। "सारस्वतौ भवतः" इति यागद्वयं स्त्रीपुंसदैवत्यं विहितम्। "एतद्वै दैव्यं मिथुनम्" इति वाक्यशेषात्। तत्र स्त्रीदेवत्यस्य याज्यानुवाक्ययोः प्रथमपठितत्वेन मन्त्रपाठक्रमात्तस्य प्रथममनुष्ठानं, ततः पुंदेवत्यस्य। तयोश्चोदकप्राप्तानां निर्वापादिधर्माणां, क्रमनियमे श्रुत्याद्यभावेनानियमे प्राप्ते, मुख्यक्रमेण तेषां क्रमः, इतरथा पश्चाद्भाविनः प्रधानस्य पूर्वमङ्गं क्रियमाणं, प्रधानेनात्यन्तं व्यवहितं स्यादिति, अङ्गप्रधानसाहित्यबोधकप्रयोगवचनविरोधः इति। "प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात्" (5-1-8) इत्यधिकरणे[1] (5-1-5) प्रवृत्तिक्रमेण क्रमो दर्शितः॥ वाजपेये सप्तदशप्राजापत्याः पशवः सहक्रियन्ते। तत्रोपाकरणनियोजनादयः, सन्निपातिनो धर्माः

---

पठिताः, पश्चादाग्नेयस्य निर्वापादयः, याज्यानुवाक्ययोस्तु विपरीतः पाठक्रमः। ततश्च भूतभाविप्रवृत्तिद्वयवशात् प्रयाजशेषाभिघारणेऽनियमप्रसक्तौ मुख्यक्रमेणाग्नेयस्य प्रथममभिघारणं, पश्चाद्ध्रुवः इत्युदाहरणमसंकीर्णम्बोध्यम्॥

१. एकैकाङ्गेन सप्तदशयागानाम् युगपदुपकर्तव्यत्वावगतेः, आवर्तनीयेष्वङ्गेषु एकेन कर्त्रा युगपदुपकारासंभवात्, अवश्यं षोडशक्षणव्यवधानं नान्तरीयकं सोढव्यमेव॥ तदधिकव्यवधाने औपदेशिसाहित्यस्यातिदेशिकानन्तर्यस्य च बाधो भवेत्। अत एव केषुचित् पशुषु न्यूनक्षणव्यवधानमपि दोष एव। अतः पूर्वपदार्थक्रम एव प्रयोगविध्यवगतप्रत्यासत्त्यनुगृहीतः उत्तरपदार्थक्रमनियमे प्रमाणम्॥ अत्र पूर्वेत्युपलक्षणम्। उत्तरपदार्थप्रवृत्तिक्रमोऽपि तदनुगृहीतः पूर्वपदार्थक्रमनियामकः इति न्यायतौल्येन वक्तुमुचितत्वात्॥ अयं च प्रवृत्तिक्रमः अनुष्ठानकालीनोऽपि, प्रयोगविधिप्रवृत्तेः पूर्वमपेक्षावशादवगम्यमानः, तदवगम्यप्रत्यासत्त्यनुगृहीतः, पदान्तरार्थक्रमं बोधयति। ततश्च तद्विनियोजकवाक्यकल्पनया, तस्य अङ्गत्वेऽवधारिते, प्रयोग-

प्रतिपश्वावर्तनीयाः। तेषां चावृत्तिः नैकैकत्य पशोः कात्स्न्येंन कृत्वा, अपरस्यापि तथैव क्रियन्ते इत्येवं काण्डानुसमयेन, किन्तु सर्वेषामुपाकरणं कृत्वा, ततः सर्वेषां नियोजनम् इत्येवं पदार्थानुसमयेन, इति "सन्निपाते प्रधानानां एकैकस्य गुणानां सर्वकर्म स्यात्" (5-2-1) इत्यधिकरणे (5-2-1) सिद्धम्॥ तत्रोपाकरणं यतःकुतश्चित्पशोरारभ्य, यत्र कुत्रचित् समाप्यते। नियामकाभावात्। तद्वदेव नियोजनादावपि अनियमे प्राप्ते, येन क्रमेणोपाकरणम्प्रवृत्तं, स एव नियोजनादावपि क्रमः। अन्यथा पदार्थानां मिथः प्रत्यासत्तिविरोधः स्यात्, एकैकस्य हि पशोः पदार्थाः मिथः प्रत्यासन्नाः कर्तव्याः। प्रयोगवचनावगतसाहित्यानुरोधात्। तत्र "वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति" इति वचनावगतपश्वन्तरसाहित्यबलात्, अन्यदीयैः

---

विधिना प्रयोगविधानम्। तदुत्तरं च प्रयोगविधेः पर्यवसानमित्यादि ध्येयम्॥ न चेदं सर्वं साहित्यानुसारेण स्यात्, तत्रैव च प्रमाणं न पश्यामः, बोधकशब्दाभावात् इति वाच्यं, एकेन पदेनानेकोपस्थितौ, क्रियान्वये एककालावच्छिन्नत्वरूपसाहित्यस्यानुभूयमानस्य, शाब्दत्वसिद्ध्यर्थं लक्षणाङ्गीकारात्। प्रतीयते हि "शतावधानवान् चैत्रः" पृथिव्यां राजानो बहवः" इत्यादौ बहुत्वावच्छिन्नानामवधानादीनां चैत्राद्यन्वयः, असति बाधके एककालावच्छिन्नः। अतः प्राजापत्यपदादौ तल्लक्षणा॥ किञ्च "प्राजापत्यैः"—इति तृतीया साङ्गप्रधानानां साहित्यं द्योतयति, न तु प्रधानानामेव। यत्र द्वितीया सप्तमी वा श्रूयते, यथा "यज्ञाथर्वणं वै काम्या इष्टयः, ता उपांशु कर्तव्याः "मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्" — इत्यादौ तत्र प्रधानमात्रकर्मकभावनायाः उपादानात्, तन्मात्रे विधेयान्वयः। यत्र तु तृतीयाश्रवणं यथा — "उच्चैः प्रवर्ग्येण" "अप्स्ववभृथेन चरन्ति" इत्यादौ तत्र प्रवर्ग्यावभृथकरणकफलकर्मकभावनोपादानात्, तस्यां चाङ्गानां करणानुग्राहकाणा-

षोडशभिः पदार्थैः व्यवधिरनुज्ञायते, नाधिकैः। प्रवृत्त्या च तन्नियमे तावद्भिरेव व्यवधानम्। अन्यथाधिकैरपि स्यात्। तस्मात्प्रत्यासत्त्या नियमः॥ मुख्य-क्रमेऽङ्गानां प्रधानप्रत्यासत्तिर्नियमकारणम्, अत्र तु तेषामेव मिथः प्रत्यासत्तिः इति भेदः॥

अथ श्रुत्यादीनां बलाबलविषये कानिचिदधिकरणानि प्रदर्श्यन्ते॥ "क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च" *(5-4-1)* इत्यधिकरणे *(5-4-1)* पाठक्रमस्य श्रुत्यर्थाभ्यां दौर्बल्यं दर्शितम्। ज्योतिष्टोमे "ऐन्द्र-वायवं गृह्णाति" "मैत्रावरुणं गृह्णाति" "आश्विनं गृह्णाति" - इति पाठ-क्रमादाश्विनग्रहस्य, तृतीयस्थाने ग्रहणे, "यवाग्वाग्निहोत्रं जुहोति, यवागूं पचति" इति पाठक्रमात् पाकस्य होमानन्तर्ये च प्राप्ते, "आश्विनोदशमो[1] गृह्यते", इति श्रुत्या, हुत्वा पचमानस्य यवागूः पाकश्च इति द्वयमप्य-नर्थकं स्यात् इति तदुभयप्रयोजनवशेन च, क्रमान्तरनिर्णयात्, न पाठ-क्रमेण क्रमकल्पनमिति॥ ब्राह्मणपाठक्रमस्य मन्त्रपाठक्रमविरोधे अनियामकत्वं "मन्त्रतस्तु विरोधेस्यात्" (1-5-16) इत्यधिकरणे (5-1-9) दर्शितम्॥ दर्श-

---

मन्वयावश्यंभावात् साङ्गप्रधानस्यैवोद्देश्यत्वमिति। एतच्च तृतीया-द्वितीयोपादानस्थलवैषम्यं स्थापितमन्यत्र "विकृतौ सर्वार्थः शेषः प्रकृतिवत्" *(3-8-13)* इत्यधिकरणे *(3-8-19)*॥

१. "आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति" इति समग्रं वाक्यं श्रूयते। तत्राद्यस्य दशमस्थानरूपक्रमविधायकत्व। तेन श्रुति-क्रमेण पाठप्राप्ततृतीयस्थानबाधः। "तं तृतीयम्" इत्युत्तरभागः पाठप्राप्ततृतीयस्थानानुवादः एव। यद्यपि ग्रहणस्य पूर्वपदार्थस्य दशमस्थानत्वे उत्तरपदार्थप्रक्षेपाख्यहोमस्यापि तत्स्थानकत्वं प्रवृत्ति-क्रमप्रमाणेन प्राप्येत, तथापि प्रवृत्तेः पाठेन बाधात्, प्राप्तथा नोत्तर-भागस्य विधित्वमपि त्वनुवादतैव॥

पूर्णमासयोः अग्नीषोमीयस्य प्रथमं ब्राह्मणं, ततः आग्नेयस्य, मन्त्रकाण्डे आग्नेयस्य प्रथमं याज्यानुवाक्यायुगलस्याम्नानं, अनन्तरमग्नीषोमीयस्य, तत्र ब्राह्मणपाठक्रमात् मन्त्रपाठक्रमाद्वा तयोरनुष्ठानक्रमः इति संदेहे, विधिवाक्यरूपब्राह्मणपाठक्रमस्य पदार्थोत्पत्तिकाल एवावधारणात्, उत्पन्नेषु पदार्थेषु, विनियुक्ते च मन्त्रे, पश्चादापततो मन्त्रपाठक्रमस्य, ततो दुर्बलत्वात्, ब्राह्मणपाठक्रमादेवानुष्ठानक्रमः, इति प्राप्ते, पदार्थस्मृतिक्रमेणैवानुष्ठानंक्रमोपजननान्मन्त्राणामेवचानुष्ठानकालेपदार्थस्मृतिजनकत्वात् तत्क्रमादेवानुष्ठानम् न तु विधिपाठक्रमात्, 'विधीनां विधानेनैव चरितार्थतया स्मारकत्वाभावात्। तदभावे विधिरपि स्मारक इति मन्त्रक्रमाभावे एव ब्राह्मणक्रमस्य प्रामाण्यं, न तद्विरोधेऽपि इति ॥ पाठक्रमस्य [२]मुख्यक्रमात् प्राबल्यं "प्रकृतौ स्वशब्दत्वाद्यथाक्रमं प्रतीयेत" *(5-1-15)* इत्यधि-

---

२. यद्यपि सूत्रकारेण, श्रुतिलिङ्गादीनामिव "श्रुत्यर्थादीनां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" — इति नोक्तमथापि तुल्यन्यायात् नवसु स्थलेषु सोदाहरणं प्राबल्यदौर्बल्यप्रदर्शकसूत्रदर्शनाच्च तदप्युक्तप्रायमेव। अत एव गुरुसार्वभौमैः स्वकीये भाट्टसंग्रहे उक्तम् "श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तीनां समवाये पारदौर्बल्यम्" इति न्या *(246 P)* यरत्नमालाद्युक्त्या तेषां विरोधे बलाबलमितः परं चिन्त्यते" इति ॥ श्रुत्यर्थविरोधचिन्ता सत्रद्वादशाहीयदीक्षाक्रमविधौ कृता *(5-1-1)* इत्यधिकरणे ॥ अर्थपाठविरोधचिन्ता *(5-4-1)* इत्यधिकरणे दर्शिता। वैकृतपाठप्राकृतस्थानविरोधचिन्ता *(5-2-10)* इत्यत्र कृता। स्थानमुख्यक्रमविविरोधविचारः *(5-1-10)* अधिकरणे प्रदर्शितः। मुख्यप्रवृत्तिविरोधे बलाबल *(5-4-2)* इत्यत्र स्थापितम् ॥ एवमनन्तरितसमवायं पंचभिरधिकरणैः तत्र तत्र विचार्य, एकान्तरितसमवाये चिन्ता, श्रुतिपाठयोः *(5-4-1)* इत्यत्र अर्थस्थानयो *(10-2-33)* इत्यत्र, पाठमुख्ययोः *(5-1-8)* इत्यत्र च त्रिषु स्थलेषु कृता। तथा द्व्यन्तरितविरोधे, श्रुतिस्थानयोर्विरोधचिन्ता *(5-1-12)* इत्यत्र प्रपञ्चिता तदन्त्यापकर्षन्यायेन ॥

करणे (5 1-8) दर्शितम्। पौर्णमास्यामुपांशुयाजानन्तरं अग्नीषोमीयः पुरोडाशः। तत्र मुख्यक्रमादुपांशुयाजाज्यनिर्वापप्राथम्यप्राप्तौ, अग्नीषोमीय-द्रव्यौषधनिर्वापस्य ततः पूर्वम्पठितत्वात् पाठक्रमादौषधनिर्वापस्यैव, प्राथम्यम्। मुख्यक्रमो हि मुख्ययोः क्रमं प्रथमं केनापि प्रमाणेनावगम्य, तत्साहित्यसंपत्तये अङ्गेषु कल्प्यमानः विलम्बते। पाठतस्त्वन्यानपेक्षतया अङ्गानामेव क्रमोऽवधार्यते इति तस्य मुख्यक्रमात् बलीयस्त्वादिति ॥ मुख्यक्रमात् प्रवृत्तिक्रमस्य दौर्बल्यं "अवदा[1]नाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात्" (5-4-2) इति दर्शितम्। दर्शपूर्णमासयोः सान्नाय्यधर्माः शाखाहरणादयः पूर्वं प्रवर्तन्ते, पश्चादाग्नेयधर्माः। प्रदानं त्वाग्नेयस्य प्रथमं,

---

त्र्यन्तरित, चतुरन्तरितविरोधेष्वेवमुदाहरणं सुधीभिरूहनीयम्। परन्तु एतद्ग्रन्थकारैः विमर्शकधुरीणैः नवसु स्थलेष्वेव, सूत्रकारेण कृता चिन्ता, समवाये विरोधविषयिणी प्रदर्शिता इति ध्येयम्॥ विनियोजकप्रमाणानां मिथो विरोधे तु ग्रन्थकारैः, विमर्शकधुरन्धरैः अनन्तरितविरोधस्य नवोदाहरणानि, एकान्तरितस्य चत्वारि, द्व्यन्तरितस्य त्रीणि, त्र्यन्तरि-तस्य द्वे, चतुन्तरितस्यैकमिति दश दत्तानि। तत्तत्स्थलविशेषोऽपि विवरणपूर्वकं निर्दिष्टः। एवं उत्तरस्यापि पूर्वस्मात् प्राबल्ये सप्तोदा-हरणानि दत्तानि तत्तत्स्थलविशेषविवरणपुरस्सरम्॥ इयमेव विमर्शन-शैली जैमिनीयतन्त्रेऽनुसरणीया इति श्रीविजयीन्द्रतीर्थपादाः आधुनि-कानस्मान् उपदिशन्तीव भाति॥ एवमुत्तरषट्के ऊहस्याष्टविधस्य, बाधस्याष्टात्रिंशद्विधस्य च संकलनं तत्तत्स्थलात् कृतं दर्शितमिति न्यायाध्वगन्तॄणाम्महदुपकृतम्॥

१. अत्र मुख्यक्रमस्य, पूर्वोत्तरप्रवृत्तिक्रमयोरनियमे प्राप्ते, नियामकतया नेदं विरोधोदाहरणमिति पूर्वमुक्तम्॥ अन्यदुदाहरणं मृग्यम्॥ अत्र सूत्रे, अवदानपदेन, न प्रधानावदानं "द्विर्हविषोऽवद्यति" इति वाक्यविहितं ग्रहीतुमलम्। यतः तदवदानं प्रदानैकपदार्थः। तच्च स्थापितं - "मुष्टि, कपाला, वदानाञ्जनाभ्यञ्जन, वपनपावनेषु

पश्चात्सान्नाय्यस्य, तत्र स्विष्टकृ[1]दवदानं प्रयाजशेषाभिघारणं, वेद्यामासादनं च किं प्रवृत्तिक्रमात् सान्नय्यस्य प्रथमं भवतु, उत, मुख्यक्रमादाग्नेयस्येति संशये, तयोर्बलाबलाज्ञानादनियमे प्राप्ते, मुख्यक्रमादाग्नेयस्यैव प्रथमं स्विष्टकृदवदानादिकं युक्तं, मुख्यक्रमे आश्रीयमाणे प्रथमः एकः पदार्थः प्रधानाद्विप्रकृष्यते। अन्ये सर्वे सन्निकृष्टा भवन्ति, प्रवृत्तिक्रमे पुनराश्रीयमाणे बहवो विप्रकृष्यन्ते। इति प्रवृत्तिक्रमस्य दौर्बल्यादिति॥ स्थानान्मुख्यक्रमस्य दौर्बल्यं "तद्वचनात्तु विकृतौ यथा प्रधानं स्यात्" *(5-1-17)* इत्यधिकरणे *(5-1-10)* दर्शितम्॥ अस्त्यध्वरकल्पा[1] नामेष्टिः,

---

चैकेन" - इत्यधिकरणे *(5-2-3)*। "चतुरश्चतुरो मुष्टीन्निर्वपति" - इति वाक्य *(5-2-4)* विहितः चतुर्मुष्टिनिर्वापः एकः पदार्थः, न तु प्रत्येकम्मुष्टिनिर्वापः। अङ्गपर्यायत्वात् पदार्थस्य, अङ्गत्वस्य विधिनिबन्धनत्वात्॥ एवं "कपालानुपदधाति, अष्टौ दक्षिणतः, एकादशोत्तरतः" इति विध्यनुसारेण सर्वकपालोपधानमेकः पदार्थः। सान्नाय्ये द्व्यवदानमेकः पदार्थः। आग्नेयादौ अवदानादिप्रदानान्तमेकः पदार्थः। एवं नेत्रद्वयाञ्जनं, सर्वशरीराभ्यञ्जनं, सर्वावयववपनं, सर्वपावनं चैकः पदार्थः॥ सर्वत्र विध्यनुसारि अङ्गत्वस्य तथैव प्रतीतेः॥ "नानाबीजेष्वेकमुलूखलं विभवात्" *(5-2-13)* इत्यधिकरणेतु *(5-2-7)* भिन्नविधिविहितत्वेऽपि पृथक्पदार्थत्वेऽदृष्टार्थत्वापत्त्या, "एकं वा तण्डुलभावात् हन्तेस्तदर्थत्वात्" *(5-2-15)* इत्युक्तरीत्या तण्डुलनिष्पत्तिफलकहन्तिविधिशेषत्वेन, चूर्णीभावनिष्पत्तिफलपेषणविधिशेषत्वेन च कृष्णाजिनास्तरणादितण्डुलप्रक्षालनकर्मणां एकपदार्थत्वं, तथा कृष्णाजिनास्तरणादिपेषणान्तमेकः पदार्थः इत्यपि निर्णीतमित्यास्तां तावत्॥

१. एकादशे *(11-2-3)* अधिकरणे तु अध्वरकल्पा एवमुदाहृता—"अग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत्, सारस्वतं चरुं, बार्हस्पत्यं चरुम्, आग्नावैष्णवमेकादशकपालं मध्यन्दिने, सारस्वतं चरुं, बार्हस्पत्यं चरुं, आग्नावैष्णवं द्वादशकपालमपराह्णे सारस्वतं चरुं बार्हस्पत्यं चरुं, यस्य

"आग्नावैष्णवमेकादशकपालं निर्वपेत् अभिचरन्, सरस्वत्याज्यभागास्स्यात् बार्हस्पत्यश्चरुः" इति। तत्राज्यबार्हस्पत्ययोः आज्यधर्माः प्रथमं कर्तव्याः, मुख्यक्रमादिति प्राप्ते यथा प्रकृति धर्माः प्रथमं कर्तव्याः, चोदकप्राप्त-स्वस्थानाबाधनाय। न च विकृतावौपदेशिकत्वेन, मुख्यक्रमस्य प्राबल्यं प्राप्तानां हि प्राकृतवैकृतानां पदार्थानां, विकृतौ मुख्यक्रमकल्पनम्। प्राकृत-पदार्थाश्च प्राप्यमाणाश्चोदकेन प्रकृतिक्लृप्तक्रमेण सहैव प्राप्यन्ते इति, नैराकाङ्क्ष्यान्न तेषां मुख्यक्रमेण क्रमान्तरकल्पनावसरः इति॥ श्रुतिविरोधे-स्थानस्य दौर्बल्यं "अङ्गानां मुख्यकालत्वात् यथोक्तमुत्कर्षे स्यात्" (5-1-23) इत्यधिकरणे। दर्शपूर्णमासविकृतावग्नीषोमीये पशौ, प्रयाजानां यथा प्रकृति हविरासादनानन्तर्यप्राप्तौ "तिष्ठन्तं पशुं प्रयजति" इति, तेषां पश्वालम्भनात्पूर्व-मपकर्षविधानात्, तेन तेषां चोदकप्राप्तस्वस्थानबाधोपगमेन दर्शितम्॥ अर्थात्स्थानस्य[1] दौर्बल्यं, "अर्थेन च विपर्यासे तादर्थ्यात्तत्वमेव स्यात्" *(10-2-74)* इत्यधिकरणे *(10-5-33)* "सोमाय पितृमते पुरोडाशमष्ट-

---

भ्रातृव्यः सोऽनेन यजेत" इति॥ एकैकस्मिन् काले त्रिहविष्कः एकैकः प्रयोगः। प्रातःकालीनः आग्नावैष्णवयागः, अष्टाकपालत्वादाग्नेयविकारः। अन्यकालीनः सः चतुरक्षरदेवतासादृश्यात् अग्नीषोमीयविकारः इत्यपि निर्णीतमष्टमे *(8-3-1)* अत्र "सरस्वत्याज्यभागा" इति शाखान्तरव-चनमप्यस्तीति प्रतीयते॥ अत्र "एतयैव यजेताभिचर्यमाणः - इति फलवाक्येनाभिचारनिरासाख्यफलोद्देशेन त्रयाणां स हतानां विधानात् एक प्रयोगविधिपरिग्रहः॥ अत एव ग्रन्थकारोद्धृतवाक्ये "अभिचरन्" इति भागः कथं संगच्छत इति चिन्त्यम्॥

१. मन्थोनाम दुग्धमिश्रास्सक्तवः। प्रकृतेचाभिवान्या =मृत-वत्सा गौः, तस्याः दुग्धं विवक्षितम्। तत्र भर्जितयवतण्डुलानां पिष्ट एव सक्तुत्वप्रसिद्धेः भर्जनोत्तरमेव पेषणम्। प्राकृत क्रमबाधेऽपि हविस्सं-पत्त्यर्थं पेषणस्य गुणलोपाधिकरणन्यायेनैव *(01-2-63सू)* भर्जनोत्तरं

कपालं निर्वपति, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्” इति महापितृयज्ञेष्टौ विहिते मन्थे, प्राप्तस्य पेषणस्य प्रयोजनवशेन चोदकप्राप्तश्रपणपूर्वकाललक्षणस्वस्थानबाधेन श्रपणोत्तरत्वोपगमात् दर्शितम् ॥ पाठविरोधात् स्थानस्य दौर्बल्यं “प्राकृताच्च पुरस्तात्” (5-2-22)

---

करणोपपत्तेः । न च क्रमान्यत्वे, पदार्थानामन्यत्वं, व्युत्क्रमेऽपि तादृशप्रत्यभिज्ञायाः अबाधात् । न च प्रकृतौ पेषणस्य पाकार्थत्वं, येनेह भर्जनोत्तरं पाकाभावात् पेषणाभावश्शङ्क्येत । तस्य, पुरोडाशपाकं प्रति उपकारकत्वे सत्यपि, पाकपेषणयोर्द्वयोरपि द्वितीयया द्रव्यसंस्कारार्थत्वात् । अतश्च यथैव प्रकृतौ हविस्सम्पादनार्थमेव पेषणं, पाकात्पूर्वमनुष्ठितं, तथैवेहसक्तुसंपत्त्यर्थं पाकोत्तरमनुष्ठानेऽपि न कश्चित् विरोधः ॥ अत एव प्रकृतौ पेषणपाकयोः पाठोऽप्यनुवाद एव । अतो वस्तुतो नात्र क्रमबाधोऽपि । तेनात्र भर्जनोत्तरमेव पेषणम् । अवघातस्तु भाष्यवार्तिककारमतयोः मन्थेऽपि भर्जनपूर्वोत्तरं पूर्वमेव वा कार्यः । धानापिष्टस्यैव सक्तुत्वात् । धानासु भाष्यमतेन भर्जनात् पूर्वमुत्तरं चावघातः क्रियते । तत्र पूर्वोऽवघातः पाकार्थः, उत्तरस्तु धानात्वसिद्ध्यर्थः । न चोत्तरावघातेन धानात्वं व्याहन्येतेतिवाच्यम् , दृढतरमुसलप्रहाराकरणेन तदनापत्तेः । वार्तिककारस्य तु सकृत् पाकात्पूर्वमेव धानायामवघातः । अतो यथाप्रकृत्येवानुष्ठानमवघातस्य ॥ अत एव भाष्यमत इव वार्तिकमते न धानाः बाधस्योदाहरणं । अपि तु मन्थ एव । पेषणस्य पश्चात् क्रियमाणत्वेन यथाप्रकृति पाकात्पूर्वमननुष्ठानेन बाधसंभवात् ॥ परिवापे तु न निर्वापः प्रोक्षणादि, नावघातः, न वा पेषणम् । श्रपणविध्याक्षिप्तोपादानकतण्डुलरूपद्वाराभावेन व्रीहिधर्माणामतिदेशेनाप्रवृत्तेः । अपितु लाजात्वान्यथानुपपत्त्यैव तत्र व्रीहिमात्रग्रहणम् ॥ सतुषद्रव्यस्यैव भर्जने लाजनिष्पत्तेः । अत एव धानावत् भर्जनोतरमपि नावघातः, लाजत्वव्याघातापत्तेः, अत एव तदा नखादिना लौकिकं वितुषीकरणम् ॥

२इत्यधिकरणे *(5-2-10)* वर्णितम् । अग्निचयने सावित्रहोमोखासंभरणादीन् कांश्चिदपूर्वपदार्थान्विधाय दीक्षणीयादयः सगुणाः आम्नाताः । तत्र दीक्षणीयादीन् कृत्वा सावित्रादयः कर्तव्याः, विपरीतं वेति चिन्तायां, प्राकृतानां प्रथमतः प्राप्तेः, यथाप्रकृति दीक्षणीयादयः प्रथमं कर्तव्याः, सावित्रादीनान्तु आगान्तुकानां "अन्ते तु बादरायणः"३ *(5-2-19)* इति न्यायेनान्ते निवेशः इति प्राप्ते, दीक्षणीयादीनां सावित्रादनन्तरमाम्नानेन प्रत्यक्षपाठक्रमात् प्राकृतस्थानबाधेन सावित्राद्यनन्तरमेव ते कर्तव्याः ॥

---

२. दीक्षणीया ज्योतिष्टोमप्रकरणे समाम्नाता । चयनं चानारभ्याधीतं वैकल्पिकं सोमयागाङ्ग "अग्निः सोमाङ्ग वेध्यताम्" इतिवचनात्, चयनपक्षे उत्तरवेद्या तस्य समुच्चयः । "उत्तरवेद्यां ह्यग्निश्चीयते" इति वचनात् । अभावपक्षे उत्तरवेदिमात्र सोमाङ्गम् । तत्प्रकरणे च सावित्रहोमोखासंभरणादयः चयनाङ्गभूताः धर्माः श्रुताः । पश्चाच्च सचयनज्योतिष्टोमाङ्गदीक्षणीयाप्रयोगोद्देशेन केचित् गुणाः श्रुताः । इति स्थितिः ॥ तत्रैव दीक्षणीयागुणश्रवणोत्तरं रुक्मप्रतिमोचनादि चयनाङ्गं श्रुतम् । ज्योतिष्टोमप्रकरणे च सामान्यतो दीक्षणीयोत्तरं दीक्षितसंस्काराः दण्डदानादयः । तदत्रापि विशेषपाठेन सामान्यपाठस्य बाधात्, दीक्षणीयोत्तरं रुक्मप्रतिमोचनादि कृत्वा ततो दीक्षितसंस्काराः इति प्राप्ते विशेषपाठस्य पश्चाद्भावमात्रबोधनेनान्यथासिद्धत्वात् अवर्जनीयतयाप्युपपत्तौ दीक्षणीयानन्तर्यानियामकत्वात् सामान्यपाठेन क्लृप्तक्रमान् दीक्षितसंस्कारानेव दीक्षणीयानन्तरं कृत्वा तद्दिनकृत्यान्ते रुक्मप्रतिमोचनादिकं कार्यमिति पूर्वन्यायापवादेन सिद्धान्तः कृतः "सन्निपातश्चेत् यथोक्तमन्ते स्यात्" *(5-2-23)* इत्यधिकरणे *(5-2-12)* ॥

३. "अन्ते तु बादरायणः तेषां प्रधानशब्दत्वात्" *(5-2-19)* इत्यनेन उपहोमानां विकृतिसन्निधिपठितानां आगन्तुकानां प्राकृतनारिष्टहोमानन्तरमेव कर्तव्यता, प्राकृतक्रमानुरोधेन सिद्धान्तिता ॥ "आगन्तूनामन्ते निवेशः" इत्यपि न्यायशरीरमुच्यते ॥

न च प्रत्यक्षपाठः गुणार्थः, न सावित्राद्यानन्तर्यार्थः इति शङ्क्यम्, यतोगुणार्थेनापि तत्राम्नानेन दीक्षणीयादीनां तत्रैव सगुणानामङ्गतिर्जायते। सा च प्रत्यक्षपाठनिमित्तत्वात् प्रकृतितोऽप्राप्तान् गुणान् तत्रैवानुष्ठापयति। गुणगुणिनोः समानस्थानत्वात् गुणिनोऽपि तत्रैवानुष्ठापयतीति। एवमन्यत्रापि श्रुत्यादीनां विरोधे बलाबलविषयाण्यधिकरणान्यूहनीयानि ॥ एवमेभिरुदाहरणैः श्रुत्यर्थादीनां, श्रुतिलिङ्गादीनामिव पारदौर्बल्यमभिधीयते। तथाहि श्रुत्यर्थविरोधे तावदर्थदौर्बल्यं प्रथमाधिकरण एव कटाक्षितम्। सत्रे सर्वेषां यजमानत्वेन प्राप्तायां दीक्षायां, चोदकप्राप्तस्याध्वर्योः कर्तृत्वस्य अध्वर्युदीक्षायां "चित्पतिस्त्वा पुनातु" इति मन्त्रलिङ्गविरोधेन त्यागेऽपि इतरेषां दीक्षायां त्यागायोगात्, इतरदीक्षालक्षणप्रयोजनवशेनाध्वर्युदीक्षायाः, सर्वानन्तर्ये प्राप्तेऽपि "ततस्तं प्रतिप्रस्थाता दीक्षयित्वार्धिनो दीक्षयति" इति श्रौतक्रमवशेनार्धिभ्यः प्राक् तद्दीक्षानिर्णयात् ॥ **अर्थविरोधे पाठस्य दौर्बल्यं करकोपाधिकरणे** (*5-4-1*) **पाठविरोधे स्थानस्य दौर्बल्यं "प्राकृताच्च पुरस्ताद्यत्"** इत्यधिकरणे (*5-2-10*) स्थानविरोधे मुख्यक्रमस्य दौर्बल्यम् (*5-2-22*) "तद्वचनात्तु विकृतौ" (*5-1-17*) इत्यधिकरणे (*5-1-10*) **मुख्यक्रमविरोधे प्रवृत्तिक्रमदौर्बल्यं**, "अवदानाभिघारण" इत्याद्यधिकरणे दर्शितमेव ॥ "अनियमोऽन्यत्र" - यत्रोक्तरूपबलाबलशालिनां श्रुत्यर्थानामभावः, तत्र न कश्चित्क्रमनियमः। यथा दर्शपूर्णमासयोः "वसन्तमृतूनां प्रीणामि" इत्यादीनां, "एको मम, एका तस्य" इत्यादीनां च प्रयाजानुमन्त्रणमन्त्राणां, शाखाभेदेनाम्नानात्, समुच्चितानुष्ठाने, न कश्चित् क्रमनियमः ॥ यच्छाखागतेन मन्त्रेण समिद्यागः प्रथममनुष्ठितः, तच्छाखागतेनैव तनूनपादप्यनुमन्त्रणीयः प्रवृत्तिक्रमादिति चेन्न, प्रवृत्तिक्रमो हि प्रत्यासत्त्यनुग्रहायापेक्ष्यते। न चात्रैकशाखागतानां [1]अनुमन्त्रणमन्त्राणां प्रत्या-

---

१. **वसन्तादिप्रकाशकमन्त्राणां न देवताकल्पकत्वं, उभया-**

सत्तिरपेक्षिता, तेषामङ्गाङ्गिभावस्यैकप्रधानाङ्गत्वस्यान्यस्य वा कस्यचिन्मिथः प्रत्यासत्तिनियामकस्याभावात्। तस्मादनियमः इति संक्षेपः ॥

एवं द्वितीये उत्पत्तिविधिप्रमेयस्य, [1]कर्मभेदस्य, तृतीये विनियोगविधिप्रमेयस्य शेषशेषिभावस्य, चतुर्थपञ्चमयो प्रयोगविधिप्रमेययोः, प्रयुक्ति-

---

काङ्क्षाप्रमाणकाङ्गभावैः याज्यापुरोऽनुवाक्यामन्त्रैः देवताप्राप्त्या, अन्यतराकाङ्क्षप्रमाणकाङ्गभावानामनुमन्त्रणमन्त्राणामनवकाशात् "एको मम" इत्यादीनामपि, निर्ज्ञातपारार्थ्यात्, श्रुतीतिकरणाविनियुक्तत्वाच्च। नापि अन्यत्रोत्कर्षः, प्रयाजानुमन्त्रणसमाख्याबाधे प्रमाणाभावात् ॥ अतश्च मनोतामन्त्रवल्लक्षणया प्रयाजीयकतूपकाराख्यफलदेवता प्रकाशकानामुभयेषामपि भिन्नकार्यत्वात् समुच्चयः। अदृष्टार्थत्वेन प्राचां समुच्चयाभिधानं न युक्तं। दृष्टार्थत्वसंभवेऽदृष्टार्थत्वायोगात् ॥ "मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्। शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥" इत्यनुमन्त्रणलक्षणस्याव्याप्त्यापाताच्च ॥ प्रकृते एकप्रयाजगतयोः नानाशाखास्थानुमन्त्रणयोः पाठाद्यभावेनाक्लृप्त-क्रमत्वं। न च नानाशाखास्थयोः क्लृप्तक्रमत्वाभावेऽपि एकशाखास्थानां पंचानामपि मन्त्राणां पाठेन क्लृप्तक्रमकत्वात् प्रवृत्तिक्रमशङ्का, पंचानां मन्त्राणां पंचप्रयाजाङ्गत्वेन, एकशेष्यङ्गत्वाभावात्, अवान्तरप्रयोग-विधिभेदेन, भिन्नप्रयोगविधिपरिगृहीतानां पाठेन क्रमानियमात् ॥ दृश्यते च पाशुकानूयाजानां, ऐष्टिकपिष्टलेपफलीकरणहोमस्य च महा-प्रयोगैकत्वेऽपि, भिन्नावान्तरप्रयोगविधिपरिगृहीतत्वेनाक्लृप्तक्रमत्वम् ॥ तस्मादनियमः उक्तवक्ष्यमाणक्रमनियामकप्रमाणस्य कस्याप्य-भावादिति शम् ॥

१. यद्यपि विधिरेव सर्वत्राज्ञातज्ञापकः, अप्रवृत्तप्रवर्तकश्च, तथा कर्मणां मिथो भेदकश्चाथापि तस्य सहकारीणि शब्दान्तराभ्याससंख्या-संज्ञागुणाप्रकरणान्तराणि षडिति कृत्वा तेषु भेदकत्वव्यवहारो भाक्तः। एवं विनियोगविधिसहकारीणि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्या-

क्रमयोः च निरूपणानन्तरं, षष्ठे अधिकारविधिप्रमेयः फलसंबन्धो निरूपितः। तत्र स्वर्गकामादिपदं विधिप्रयोजनभूत-पुरुषप्रवृत्त्यपेक्षित-फलविशेषान्वयपरं, नतु चन्दनादिरूप - [2]यागादिद्रव्य - समर्पणपरं। तच्च फलं स्वर्गकाम इत्याद्युद्देश्यगत - लिङ्गविशेषस्याविवक्षितत्वात्, [3]स्त्रीणामप्यविशिष्टम्।

---

रूपाणि भक्त्या विनियोजकप्रमाणानि इति। तथा प्रयोगविधिसहकारीणि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्यात्मकानि भाक्तानि क्रमप्रमाणानि इति शास्त्रे व्यवह्रियन्ते॥ २. षष्ठाध्याये, भावार्थाधिकरणन्यायेन समानपदोपात्तधात्वर्थस्य भावनाभाव्यत्वमस्तु, स्वर्गादेः तु कामनाविषयत्वेन श्रुतस्यापि साधनत्वमेव, योग्यत्वात्, "चन्दनं स्वर्गः" इत्यादिप्रयोगात्, स्वर्गशब्दस्य द्रव्यवाचित्वमेव, सिद्धद्रव्यस्य साध्ययागं प्रति साधनत्वं युज्यते, भाव्यस्य भूतसाधनत्वं न घटते, सिद्धः कुठारादिर्हि छेदनसाधनं दृष्टं लोके, कामपदं तु साधनार्जनकामनानुवादः,। यद्वा स्वर्गकामना यागाङ्गतया तत्पदेन विधीयते, अत एव निष्कामकर्मानुष्ठाने निर्दिष्टफलं न भवतीत्यपि संगच्छते इति पूर्वपक्षं मनसि निधायेदमुक्तम्॥ ३. ननु नेदं लिङ्गमधिकारिविशेषणं, येनोद्देश्यगतत्वेन ग्रहैकत्वन्यायेनाविवक्षा स्यात्, अपि तु कर्तृसमानाधिकरणत्वेन कर्तृविशेषणमेव, अतश्चाख्यातोपात्तैकत्ववत् पुंस्त्वमपि विवक्षितमेव, "भार्या पुत्रश्च दासश्च त्रय एवाधना स्मृताः। यत्ते समधिगच्छन्ति, यस्यैते तस्य तद्धनम्॥" इति स्त्रीणां द्रव्याभावे कथमधिकारः। अपि च "शतमतिरथं दुहितृमते दद्यादार्षेयविवाहे गामिथुनम्" इत्यादिना पित्रा भर्त्रे मौल्येन दासवत् विक्रीताः महिलाः॥ अत एव "गर्भेणाविज्ञातेन हतेन भ्रूणहा" इति यज्ञसाधनपुंगर्भहननशङ्कया, भ्रूणपदवाच्ययज्ञहन्तृत्वलिङ्गमप्यवकल्पते। अन्यथा स्त्रीत्वेन विज्ञातेऽपि, यज्ञहन्तृत्वाविशेषात्, अविज्ञातपदमनर्थकं स्यात्। तथा "आत्रेयीं हत्वा भ्रूणहा" इत्यपि लिङ्गम्। आत्रेयी=सगर्भा, न तु तद्गोत्रोत्पन्ना। अतः पुमानेव यज्ञादावधिक्रियते इति प्राप्ते सत्यपि कर्तृविशेषणे पुंस्त्वे प्रमाणान्तरेण स्त्रियाः अधिकारावगतेः,

विधिलाघवानुरोधेन, साधुत्वार्थमवयुत्यानुवाद एव पुंस्त्वम्। यथा "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यत्र। अत्र हि प्रमाणान्तरेण क्षौमे वसानावग्निमादधीयाताम्" इति प्रमाणान्तरेण स्त्रियाः आधानेऽधिकारावगमात् कर्तृविशेषणमेकत्वं पुंस्त्वं चावयुत्यानुवाद इत्येवाभ्युपगन्तव्यम्॥ कर्तृत्वे व्यासज्यवृत्तिनि एकत्वान्वयस्वीकारेऽपि लिङ्गस्यावयुत्यानुवादताऽऽवश्यकयेव। तत्वन्तु वसानवाक्ये द्वित्वं नाधिष्ठानगतद्वित्वपरं, किन्तु अधिष्ठानानेकत्वमात्रपरं, तेन पत्न्यनेकत्वेऽपि न दोषः। अतः "एक एव पुमान् स्त्रीसद्वितीयः आधानेऽधिकारी" इति सिद्धान्तः॥ वस्तुतस्तु पुंस्त्वं न कर्तृविशेणमनपेक्षितत्वात् "राजा राजसूयेन"—इत्यत्रापेक्षानुसारादस्तु राजत्वस्य कर्तृविशेषणत्वेन विवक्षा। अत्र तु योग्यत्वादधिकारिविशेषणत्वमेव। ततश्च तस्याधिकारिणः फलम्प्रत्यपि प्राधान्यात्, उद्देश्यत्वेन तद्विशेषणस्य पुंस्त्वस्याविवक्षा॥ तत्वन्तु प्रथमापेक्षितत्वात् "स्वर्गकामः" इति पदस्य फलपरत्वमेव, इति क्व पुंस्त्वस्य विवक्षाप्रसक्तिः। निबन्धनविवरणकाराः अपि तत्पदस्य, नियोगापेक्षितनियोज्यपरत्वमेव वर्णयन्ति। तदाप्युद्देश्यविशेषणतया अविवक्षितमेव लिङ्गम्॥ कर्तनादिभिरर्जनसंभवात्, पित्रादिदत्तस्य दायस्य वा, स्मृतिषूक्तत्वाच्च न द्रव्यहीनाः स्त्रियः॥ "धर्मे चार्थे च कामे च नातिचरितव्या त्वया" इति स्मृत्या पत्यार्जितमपि उभयसाधारणमेव॥ अत एव स्त्रीसाहित्यएव दक्षिणादानादौ स्वत्वानवृत्तिः "भसदा वा एनाः परगृहाणामैश्वर्यमवरुन्धते" इत्यपि स्मरणम्॥ "संपत्नी पत्या सुकृतेन गच्छताम्" इत्यादि मन्त्रवर्णात्, "पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु" इति स्मरणाच्च पत्न्या अप्यधिकारः। "पत्युर्नो यज्ञसंयोगे" इति वैयाकरणानुशासनमपि स्वामित्वाभावेऽनुपपन्नं स्यात्॥ यत्तु "भार्या पुत्रश्च" इतिवचनं, क्रीतत्वादिवचनं च, तत् "न स्वातन्त्र्यमर्हति" इति वचनान्तरानुसारादस्वातन्त्र्यपरम्॥ मौल्यदानं त्वदृष्टार्थं, कन्यायां कन्यात्वातिरिक्तस्वत्वाभावस्य षष्ठसप्तमाद्ये "स्वदाने सर्वमविशेषात्" *(6-7-1)* इति पूर्वपक्षानन्तरं "यस्य वा प्रभुः स्यादितरस्याशक्यत्वात्" (6-7-2) इति सूत्रेण स्थापितत्वात्॥ अत एव कन्यादानं

"ऋद्धिकामाः [४] सत्रमासीरन्" इत्यादावेकैकस्य, कृत्स्नं फलं नतु परिषद्गतं फलं, इत्येकैकस्य फलावयवः, इत्यादिरूपेणाधिकारः सापवादः षष्ठे प्रपञ्चित ॥ एवंरूपार्थप्रतिपादनार्थं प्रवृत्तस्य षष्ठाध्यायस्य प्रथमे पादे कर्माधिकारः कर्तुरन्धपङ्ग्वादेर्नास्ति, स्त्रियान्तु 'संपत्नी" इति मन्त्रवणर्दास्ति, स च पत्या सहेति, एवमादिना अधिकारी निरूपितः । द्वितीये सत्राधिकारिणां प्रत्येकं कृत्स्नं फलं, दर्शपूर्णमासयोः एककर्तृनियमः, काम्यं कर्म समापनीयमित्येवमादयः, अधिकारिधर्माः कथिताः । तृतीये द्रव्यस्य[५] प्रतिनिधिरस्ति, न देवताग्न्यादीनां, माषादीनां प्रतिषेधात् अधिकारिणश्च स प्रतिनिधिः नास्ति, इत्यादि निरूपितम् । चतुर्थे पादे पदार्थलोपनं विचारितम् ।

---

दत्तकत्वेन पुत्रदानं चौपचारिकमेव, रजकाय वस्त्रदानवत् ॥ आत्रेयी अत्रिगोत्रोत्पन्ना, नत्वापन्नगर्भा । सत्यपि स्त्रियाः कचित्कर्माधिकारेऽस्मात गमकान्तरे जपादिसकलवैदिककर्मानधिकारात् अविज्ञातलिङ्गदर्शनं पुंवधे प्रायश्चित्तविशेषविधानार्थम् तस्मादस्ति स्त्रियाः पत्या सह वदिकयागादिकर्मस्वधिकारः ॥ ४ षष्ठद्वितीयप्रथमेचिन्तितं ननु एकसत्रप्रयोगादनेकफलोत्पत्तिर्न युक्ता, एकप्रयोगादेकफलोत्पत्तिनियमस्य योगसिद्ध्यधिकरण 4-3-9) न्यायेन स्थितत्वात्, अन्यथा एकस्मादेव दर्शप्रयागात् युगपत् क्रमेण वानन्तस्वर्गोत्पत्त्यापत्तेः इति चेन्न वैषम्यात्, एकस्मिन् कर्तरि फलानेकताभावेऽपि कर्त्रन्तरेषु अनन्तफलोत्पत्तौ बाधकाभावात् । समवायसम्बन्धेनव फलत्वावच्छिन्नं प्रति फलत्वेन प्रतिबन्धकत्वकल्पनादात्मान्तरे बाधकाभावात् ॥ ५ ननु, सर्वशक्त्यधिकरणन्यायेन (6-3 1) अशक्तौ अङ्गहीनेन कर्मणः कर्तव्यत्वेऽपि अनङ्गनीवारग्रहणे प्रमाणं नास्ति । न तावत् द्रव्यशास्त्रं प्रमाणम्, तस्य व्रीहित्वावच्छिन्नविधायकत्वेन नीवाराविधायकत्वात् । न हि तेषु व्रीहित्वमस्ति । नीवारत्वं हि तद्गतम् । नापि कर्मशास्त्रं प्रमाणम् । द्रव्यशास्त्रेण द्रव्यान्तरसाधारणाक्षेपप्रतिबन्धेन व्रीह्यादिविधानात्, द्रव्यान्तराक्षेपानुपपत्तेः । नहि व्रीहिशास्त्र शब्दतो नियमविधिः, अपि

कृत्स्ननाशे सति आज्येन यजेन, इडाद्यर्थस्य नाशे शेषान्न ग्राह्यमित्येवमादिकं च ॥ पञ्चमे ज्योतिष्टोमस्यैका दीक्षा, द्वादशाहस्य द्वादश दीक्षाः, इत्यादि-

---

तु आक्षेपप्रतिबन्धद्वारा फलतः । अतश्च यथैवाग्निविद्ययोः स्वविधि-प्रयुक्तयोरेव लाभादाक्षेपप्रतिबन्धेन, अशक्तस्य शूद्रादेर्वा न तदाक्षेपः, अपि तु अग्निविद्ययोरधिकारिविशेषणत्वमङ्गीकृत्य, तद्वत एवाधिकारः, एवं द्रव्याद्यशेऽपि प्रधानविधिनानाक्षेपात्, व्रीह्यादिश्रुतद्रव्यवत एवाधिकारित्वकल्पनेन, न द्रव्यान्तरोपादनम् । अतः प्रतिनिधिग्रहणे प्रमाणाभावात्, आरब्धः प्रयोगः द्रव्याभावे उत्स्रष्टव्य एवेति प्राप्ते— द्रव्यशास्त्रेण द्रव्यान्तरसाधारण्येनाक्षेपप्रतिबन्धेऽपि व्रीह्यादीनामग्नि-विद्ययोरिव, स्वतन्त्रप्रयोगविधिविधेयत्वाभावात्, प्रयाजादिवत् प्रधान-विधेरेव व्रीह्यादिप्रयोगविधायकत्वात्, प्रयोगविधिविषयीभूतानां तेषा-मधिकारिविशेषणत्वानुपपत्तौ, निमित्तबलादशक्तौ त्यागेनापि प्रधान-कर्तव्यतावगतेः, तस्य च द्रव्यान्तरमन्तरेणायोगाद्युक्तं तदाक्षेपकत्वं । अग्निविद्ययोस्तु स्वतन्त्रप्रयोगविधिसिद्धयोः एतत्प्रयोगविधिविषयत्वा-भावेन यथाशक्त्युपबन्धविषयत्वाभावात्, युक्तमधिकारिविशेषणत्व-मिति वैषम्यम् । न चवमपि द्रव्यस्योत्पत्तिवाक्ये श्रुतस्य, निमित्तान्वयात् पूर्वमेव यागान्वयात्, पश्चादवगम्याननिमित्त एव द्रव्यावच्छेद-कल्पनात्, द्रव्यावच्छिन्नजीवनादेरेव, निमित्तत्वावगतेः, कथं द्रव्या-न्तरेण यागः इति वाच्यम् । विशिष्टविधौ निमित्तान्वयात्पूर्वं भावनाया-मन्वितस्यापि द्रव्यस्य, विशेषणविधौ यागाङ्गताबोधदशायां, यागगत-फलवत्त्वज्ञानार्थं, कामयावज्जीववाक्याभ्यामेकवाक्यत्वाङ्गीकारेण, निमित्तापेक्षयाद्यन्वयोत्तरमेव, द्रव्यस्य यागाङ्गताबोधेन प्रयाजादिवत्त-त्रापि यथाशक्त्युपबन्धोपपत्तेः । अतस्तदा कर्मशास्त्रेण सदृशसाधारण्येन द्रव्यन्तराक्षेपात् युक्तः प्रतिनिधिः ॥ तस्य चाङ्गत्वाभावेऽपि उपकार-कत्वमात्रेण ग्रहण बोध्यम् ॥ एवं च कर्मचोदनया यत्किंचित् द्रव्य-प्राप्तौ युक्त्यन्तरेण सदृशस्य, वचनेन पूतीकानां च, नियमः ॥ व्रीहित्व-जातेः व्रीह्यवयविनश्च यागसाधनत्वासंभवे, व्रीह्यवयवानां केषांचित्, नीवारगतानां यागसाधनत्वं भवतु इति दृष्ट्या नीवारोपादानम् ॥

निरूपितम् ॥ षष्ठ सत्राधिकारिणस्तुल्यकल्पा[६] एव सत्रं प्रविशेयुरित्येवमादिकं,

---

व्रीहिवाक्येन त्रयाणां यागसाधनताबोधनात्, नान्तरीयकतया, नीवारत्वनीवारावयविनोर्ग्रहणात् ॥ नीवारावयविनः, कतिपयव्रीह्यवयवसहितैः भूयोभिर्नीवारावयवैरारब्धत्वस्वीकारस्यावश्यकत्वात्, अन्यथा नीवारे व्रीहिसादृश्यप्रतीतेरभावापातात् । अत एव शुक्तौ रजतसादृश्येन रजतभ्रमज्ञानानुरोधेन कतिपये रजतावयवाः तदारम्भकतया स्वीक्रियन्ते, भ्रमे सत्ख्यातिवादश्चाश्रीयते रामानुजीयैः ॥ एवं द्रव्यस्य सदृशमन्दसदृशप्रतिनिध्युपादाने स्थितेऽपि षण्णां न प्रतिनिधिः तथाहि — "न देवताग्निशब्दक्रियमन्यार्थसंयोगात्" *(6-3 18)* "प्रतिषिद्धचाविशेषेण हि तच्छ्रुतिः" *(6-3-20)* "तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात्" *(6-3-21)* सूत्र त्रयेण अधिकरणत्रये निर्णीतम् ॥ दाशामिकाधिरणन्यायेन शब्दमात्रस्य, विधिगतशब्दविशिष्टस्यार्थस्य वा देवतात्वस्य स्थितत्वात् शब्दान्तरोपादाने प्रमाणाभावान्न देवतायाः प्रतिनिधिः । देवतायाः विधिगतायाः असंभवे यागपदार्थस्य लोपः, अभावे विधिविहितप्रजापतिर्वा ग्राह्यः ॥ अग्नेः स्वतन्त्रविधिविहितस्याधिकारिविशेषणत्वेन प्रयोगविध्यविषयत्वान्न प्रतिनिधिः । अभावे विधिविहितब्राह्मणपाण्यादिर्वा ग्राह्यः ॥ कर्मचोदनाक्षिप्तस्य शब्दान्तरस्य मन्त्रान्तरस्य वा नियमादृष्टजनकत्वे प्रमाणाभावात् मन्त्रस्य न प्रतिनिधिः । अदृष्टार्थप्रयाजाद्यारादुपकारकाणामपि अन्यस्मात्तददृष्टोत्पत्तौ प्रमाणाभावान्न प्रतिनिधिः । "अयज्ञिया वै माषाः, वरकाः कोद्रवाः" इत्यनर्हार्थप्रत्ययेन साधनत्वसामान्यप्रतिषेधात् विशेषविहितातिरिक्तस्थले (नवग्रहमखे राहुहोमे विशेषविधानम्) सर्वत्रैव माषादिप्रतिषेधप्रतीतेः न ते प्रतिनिधेयाः ॥ द्रव्यसामान्याभावे तु ग्राह्या एव । अत्र यज्ञोद्देशेन लक्षणया, माषनिषेधविधानात्, नैकप्रसरताभङ्गः ॥ मृते तावत् यजमाने, पत्न्यां वा, नान्यतरेणान्यतरस्य प्रतिनिधिः । अन्यभावात् इति संक्षेपः ॥

६. ननु सत्रे भिन्नकल्पानामप्यधिकारः, न चैककल्पकरणेऽन्येषां वैगुण्यप्रसङ्गः, वासिष्ठानामित्यत्र मन्त्रस्य शुद्धवासिष्ठार्थत्वविधाने

विचारितम् ॥ सप्तमे पित्रादि न देयमिति देयविचारः कृतः । अष्टमे लौकि-काग्नौ उपनयनहोमाः, स्थपतीष्टिस्तथा७ इत्येवमादिरग्निविचारः कृतः ॥ एवं विधिचतुष्टयप्रमेयात्मकोपदेशविचारः पूर्वषट्केन भगवता परमकारुणिकेन

---

प्रकरणबाधापत्तिः, क्रतुयुक्तपुरुषार्थत्वे परिसंख्यापत्तिः, अतः वासिष्ठ-त्वमेव कर्तृपरिच्छेदद्वारा मन्त्रे विधेयं, तच्च प्रयोजककर्तृयजमानपरिच्छे-दकत्वेना हौत्रे वैश्वामित्रविधानात् साक्षात् मन्त्रोच्चारणकर्तृ होतृरिच्छे दकतया विध्ययोगात्। एवं चौदुम्बरीसम्मानवत् एकवासिष्ठप्रयोज-ककर्तृकत्वेऽप्यन्येषां वैगुण्याप्रसंगात् भिन्नकल्पानामधिकारमाशङ्क्य, विकल्पेन प्राप्तयोर्मन्त्रयोर्नियमविधिसंभवे नियतप्राप्तावासिष्ठव्या-वृत्तिरूपपरिसंख्याफलकत्वायोगात्, वासिष्ठोद्देशेन मन्त्रविनि-योगात्, अन्येषां वैगुण्यापत्त्या समानकल्पानामेव सत्रेऽधिकारः ॥

७. निषादस्थपतिः कर्मधारयसमासाङ्गीकारेणात्रैवर्णिक इति स्थितं षष्ठे (6-1-12) तस्याधानसिद्धाग्न्यभावात् कथमिष्टिः कर्तव्येति चेत्—“यत्र क्वचन होष्यन् स्यात् पञ्चभूसंस्कारान् कृत्वा, लौकिकाग्निं प्रतिष्ठा-पयेत्” इति स्मृतिवचनेनाग्न्यन्तराभावे होममात्रोद्देशेन लौकिकाग्नि-विधानात्, तमेव तद्देशे स्थापयित्वा तेष्विष्टिः कार्या ॥ अवकीर्णि-पशुरपि “यो ब्रह्मचार्यवकिरेत् स नैर्ऋतं गर्दभं पशुमालभेत” इति वाक्यविहितः भार्याभावेनाधानाभावात् लौकिक एवाग्नौ कार्यः । सत्यपि तस्य त्रैवर्णिकत्वे विद्वत्त्वे च ॥ ८. “यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्, स त्रेधा तण्डुलान् विभजेत्, ये मध्यमाः स्युः तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठाः स्युः तानिन्द्राय प्रदात्रे दधंश्चरुम्, येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्” इत्यनेन विहिताभ्युदितेष्टिः षष्ठस्य पञ्चमे षड्भिरधिकरणैः बहुधा चिन्तिता ॥ विभागवाक्येन देवतापनये कृते मध्यमादिवाक्ये द्रव्योद्देशेन देवताविधिपक्षः आश्रितः । अपिष्टभागवाक्ये एकप्रसरता-भङ्गपरिहाराय देवतोद्देशेन पिष्टद्रव्यविधिपक्षः पेषणमात्रविधि-फलकः यथा तथा ॥ उपांशुयाजद्रव्यस्याज्यस्यापनयसदसद्भावचिन्ता, निर्वापात् प्रागपि प्रक्रममात्रस्यैव निमित्तत्वं, तण्डुलावस्थातः

जैमिनिना महर्षिणा कृत इत्यलम् ॥

---

पूर्वमपि वैकृतीभ्य एव देवताभ्यो निर्वापादिकं कार्यम्, अर्धनिरुप्ते चन्द्राभ्युदये निषेधस्यापनस्य प्रवृत्त्या, देवतान्तरसंयोगविधेरप्रवृत्त्या च तूष्णीमत्रशिष्टनिर्वापः, अस्नन्नयतोऽप्यभ्युदितेष्टावधिकारः इत्यादि चिन्तितम् ॥

पंचलक्षण्या-षष्ठस्य कः सम्बन्धः? असंगतं वदन्ननुपादेयवचनः किल भवेत्? — "भेदादिलक्षणैरेवमनुष्ठेये निरूपिते । कोऽनेनाधिक्रियेतेति साम्प्रतं सम्प्रधार्यते ॥" — "तदुपोद्घातरूपेण त्वादावेतत् विचार्यते । कर्मभिः पुरुषः कर्ता किमाधिक्रियते न वा ॥" —अधिकार-लक्षणारम्भार्थं प्रथमं अधिकारसद्भावः प्रथमाधिकरणेनोपोद्घात-रूपेण प्रतिपाद्यते ॥ ननु, साधिकारस्यैव विधेरितिकर्तव्यताकाङ्क्षा । आकाङ्क्षाधीनश्च विनियोगः । इति विनियोगविधिः तावत् अधिकार-विध्यपेक्षः । तथा साधिकारस्यानुष्ठेयप्रयोगापेक्षा । नतु निरधि-कारस्य इति कर्मानुष्ठापकः प्रयोगविधिरप्यधिकारविध्यपेक्ष एव । तस्माद्विनियोगविधिप्रमेयशेषशेषिभावव्युत्पादन परस्य तृतीयस्य, प्रयोगविधिगम्य प्रयुक्ति क्रमव्युत्पादनपरयोः चतुर्थपंचमयोश्च, अधि-कारविधिप्रमेयव्युत्पादनपराधिकारलक्षणोपजीवकत्वेन, अस्य तृतीयाद्य-पेक्षया पूर्वभाव एव किल संगतः इति चेदुच्यते ॥ शेषशेषि-भावादयश्च स्वर्गकामस्याधिकारः इति अधिकारसद्भावमेवापेक्षन्ते । न तु तिर्यगादिव्यतिरिक्तस्य, त्रैवर्णिकस्य, अप्रतिसमाधेयाङ्गवैकल्यरहि-तस्य, स्वर्गकामस्याधिकारः इति, एव रूपमधिकारविशेषम् ॥ अधिकार-विशेषो हि षष्ठाध्यायार्थः । नाधिकारसद्भावमात्रम् । तस्य प्रथमाधि-करणमात्रप्रतिपाद्यस्य अध्यायार्थत्वानुपपत्तेः । अतः शेषशेषिभावादिनि-रूपणस्याधिकारविशेषनिरूपणानपेक्षत्वात्, तन्निरूपणापेक्षया पंच-लक्षण्याः अनुष्ठेयप्रतिपादिकायाः पूर्वभावो न्याय्य एव ॥ यद्यपि लोके, "अयं वोढा, अस्य को भारः?" इति वोढतोऽपि भारनिरूपणमस्ति । अतः "शक्त्यपेक्षोऽधिकारः, अशक्तस्य तिर्यगादेरनधिकारात्, शक्तिश्च विषयनिरूपणाधीनरूपणा, विषयश्चाध्यायचतुष्टयप्रतिपाद्यः अनुष्ठेयवर्गः ॥

इत्यनुष्ठेयवर्गनिरूपणपरस्याध्यायचतुष्टयस्य, हेतुत्वं संभवत्येव। अत एवाहुराचार्याः—" भारो यो येन वोढव्यः, स प्रागवगतो यदा। तदा कृत्स्नस्य वोढेति शक्यं कर्तुं निरूपणम् ॥ — इत्येतदपि न समीचीनम्, लोके वोढृतोऽपि भारनिरूपणसद्भावात् अथापि - लोके एवमपि दृश्यते - " अयमेतावत् पूर्वमूढवान्, इदानीमप्येतावत् वोढुं शक्नोति"- इति एवं वोढृत्वं निश्चित्य, "अयं वोढा, अस्य को भारः" - इति वोढृतो भारनिरूपणं वाच्यम् ॥ "एतावद्वोढुं शक्तः"—इति निश्चयश्च, वोढव्यस्यैतावत्तानिश्चयाधीनः। एवं च लोके—"अयं वोढा, अयमस्य वोढुर्भारः"—इतीदं निरूपणं विविच्यमानं, "एतावत् वोढुं"— इति यत् द्रव्यसामान्यमवगतं तस्य द्रव्यस्य - " अयं भारः" इयेव विशेषनिरूपणमात्ररूप पर्यवसितमिति, लोकेऽपि नास्ति वोढृतो भारनिरूपणम् ॥ अतः युक्तं, एव वोढव्यनिरूपणपरचतुरध्याय्याः, वोढृनिरूपणपरषष्ठाध्यायात् पूर्वनिरूपणं संगतमिति ॥ सन्ति अत्राध्याये अष्टौ पादाः। तत्र प्रथमे पादे - अन्धबधिरपङ्गुमूकदेवतिरश्चां न कर्मस्वधिकारः, दम्पत्योः सहैवाधिकारः, त्रैवर्णिकस्यैव सः, आधानेऽपि एक एव पुमान् सपत्नीकोऽधिक्रियते, अद्रव्योऽपि द्रव्यमार्जयित्वाऽधिक्रियते, अत्रैवर्णिकयोरपि रथकारनिषादस्थपत्योर्वचनबला दधिकार इत्येतत् प्रथमपादे निरूपितम् ॥ अथ, स्वर्गकामनिषादस्थपत्यादिभिः अधिकारिनरोपस्थापकशब्दैः अधिकारनिरूपणानन्तरं, द्वितीये पादे आख्यातेनाधिकारो निरूप्यते ॥ आख्यातं चानवगतसंख्यामात्रप्रतिपादकम्। तत् द्वारा नरप्रतीतिः, विलम्बिता इति पादान्तरत्वमानन्तर्यञ्च ध्येयम् ॥

सत्रे प्रत्येकं कृत्स्नफलप्राप्त्या, प्रत्येकं बहूनामधिकारः, वीतायां फलेच्छायामवाप्ते वा फले, प्रक्रान्तं काम्यं कर्म परिसमापनीयमेव, लौकिककर्मसु नायं नियमः, तस्मादर्थेन गम्येत, अप्राप्ते शास्त्रमर्थवत् इत्यपवादः, निषेधवाक्यार्थः यावज्जीवकालस्य पुनरागमे, कर्मणामावृत्तिः, अन्तः क्रतु आचारप्राप्तानामात्यावृत्तिरेव, सोमविद्याप्रजमृणरूप निर्यातनीयम् इत्येवं विचाराः द्वितीये विचारिताः ॥ तृतीये पादे नित्ये यथाशक्त्यङ्गानुष्ठानं, काम्ये सर्वाङ्गशक्तस्यैवाधिकार इति

निरूप्य, प्रतिनिधिविचारो विस्तृतः ।। देवताग्निशब्दक्रियस्य, प्रति–षिद्धस्वामिनोश्च प्रतिनिध्यभावः, वाचनिकप्रतिनिधिप्राबल्यमित्यादिकं विचारितम् ।। द्रव्यापचारे प्रतिनिधिनानुष्ठानप्रकारं निरूप्यास्मिन् तुरीये पादे, पञ्चमे पादे-प्रायश्चित्ताधिकारो निरूप्यते।। पञ्चमे पादे कालापचारनिमित्तप्रायश्चित्ताधिकारो निरूप्यते - अभ्युदयेष्टि विचारः सम्पूर्णः कृतः। उत्तरभागे अपच्छेदन्यायविचारः समग्रः कृतः। पूर्वेषु पादेषु - प्रकृतिष्वधिकारः प्राधान्येन निरूपितः। षष्ठे पादे तु विकृत्यधिकारः प्राधान्येन निरूप्यते इति पादान्तरत्वमानन्तर्यञ्च । तुल्यकल्पानामेव सत्रेऽधिकारः, वचनात्तु द्विसंयोगः पाणिवत्, राज्ञः पुरोहितस्य च भिन्नकल्पयोरप्यधिकारः, ब्राह्मणानामेव सत्राधिकारः, अध्वरकल्पादौ श्रुतसाप्तदश्यके त्रैवर्णिकाधिकारः इत्यादि प्रपंचितम् । पूर्वेषु पादेषु एकपदपर्यालोचनात् अविशेषतः प्रसक्तस्य, अधिकारस्य, पदान्तरवाक्यान्तरादिबलात् व्यवस्था कथिता । अस्मिन् सप्तमे पादे तु यत्पदपर्यालोचलादविशेषतः प्रसक्तिः, तत्पदबलादेव विशेषे व्यवस्थाप्यते इति पादान्तरत्वमस्य सूक्ष्मत्वादानन्तर्यं च । धनस्यैव दानं न पित्रादीनां, सार्वभौमो महापृथिवीं न दद्यात्, नापि मण्डलं माण्डलिकः, सर्वस्वदाने, अर्जयित्वा न देयं, दासातिरिक्तः शूद्रो न देयः, विश्वसृजामयनेऽधिकारिनिरूपणमित्यादिकं विचारितम् । अथाष्टमे चतुर्होतृहोमादिषु आहिताग्नेर्नास्त्यधिकारः इत्येवमधिकारापवादः प्राधान्येन व्युत्पाद्यते । लौकिक एवाग्नौ उपनयनहोमः, स्थपतीष्टिरपि लौकिक एवाग्नौ अवकीर्णिपशुयागोऽपि तथा, याञ्चक्रयणम्, तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्रव्यं नियतं कर्तव्यम्, 'अनर्थकंत्वनित्यं स्यात्'- तेन प्रधानविरोधे पयोव्रतं न नियमितव्यं, छागविशेषः एव पशुद्रव्यकेषु इत्यादिकं विचारितम् । 'अधिकृतिरिति सिद्धा भेदशेषप्रयुक्तिक्रमनियमविचारैरेतया चाधिकृत्या । सुविदित उपदेशः, अनन्तरं चातिदेशः विकृतिषु, तत ऊहो बाधतन्त्रप्रसङ्गाः।"

१. द्वितीयाध्यायस्य - भावनाभेद एवाध्यायार्थः । अपूर्वभेद-धात्वर्थभेदौ तु तत्र फलतया गुणतया, चान्यथासिद्धावित्यध्यायभेद-शङ्कायाः अनवकाशः प्रथमपादार्थः उपोद्घातप्रसक्तानुप्रसक्तम्-२. द्वितीयपादार्थः– शब्दान्तरादिभिः पञ्चभिः कर्मभेदनिरूपणम्-३. कर्मभेदापवादः तृतीयपादार्थः । ४. विनियोग (प्रयोग) भेदा-भेदचिन्ता, शाखान्तरीयाङ्गोपसंहारश्च भेदापवादश्च चतुर्थपादार्थः।

तृतीयाध्यायस्य – शेषशेषिभावोऽर्थ । श्रुतिप्रमाणकविनियोगः प्रथमपादार्थः। लिङ्गमानकविनियोगः द्वितीयपादार्थः । अवशिष्ट–प्रमाणकविनियोगः, तेषां विरोधे बलाबलविचारश्च तृतीयपादार्थः । क्रत्वाचिन्तया प्रकरणविनियोगः चतुर्थपादार्थः। शेषकार्यापवादचिन्ता पञ्चमे । अनारभ्याधीतानामङ्गत्वविचारः षष्ठे । एकप्रकरणगताङ्ग-प्रधानानां समानासमानविधानत्वविचारः सप्तमे । सामाख्यानिका-ध्वर्यं कर्त्रादिबाधेन स्वामिकर्तृकत्वं अष्टमे प्राधान्येन चिन्त्यते ।

एवं चतुर्थाध्यायस्य-अनुष्ठानापरपर्यायप्रयुक्तिरर्थः । साक्षा–द्यागसाधनहविरादेः प्रयोक्तृता प्रथमे पादे चिन्त्यते । द्वितीये तु पार-म्पर्येण तत्साधनस्वर्वादेः प्रयुक्तिः । पादद्वयेन क्रतुप्रयुक्तिचिन्तानन्तरं तृतीये पुरुषार्थपदसूचितफलप्रयुक्तिर्विचार्यते । चतुर्थे फलप्रयुक्त्य-पवादचिन्ता । प्रयोज्याङ्गजातविचारः चतुर्थे कृतः ।

तदनन्तरं पञ्चमाध्याये-तन्निष्ठः क्रमो विचार्यते । श्रुत्यादिषट्-प्रमाणगम्यक्रमनिरूपणं प्रथमे । पदार्थानुसमयकानुण्डासमयरूमक्रम-विशेषचिन्ता द्वितीये, अभ्यासाश्रितः क्रमः तृतीये, क्रमप्रमाणबलाबलं चतुर्थे च पादे चिन्त्यते । इत्येवं सङ्गतिः संग्रहेण ज्ञेया ।।

इति श्रीविजयीन्द्रभिक्षुपादकृतायां न्यायाध्वदीपिकायां
प्रथमो भागः समाप्तः ।।